उषित्वा तै ३, ४, १०,२¶.

१वस्[a]– वसाम् ऋ ५, २, ६.

वसत्– -सतः खि ३,१०[२],१;–सन् ऋ १०,१४६,४;–न्तम् तै३,१, ९, ४¶; शौ २०,१३६,१६!?[b].

वसति[c]– -तिः ऋ ६, ३,३[d]; १०, ९७, ५; मा १२, ७९†; १८, १५; ३५, ४†; का १३, ६, ५†; १९, ५, ३; ३५, ४, ४†; तै ४, २, ६, २†; ७, ५, २; मै २, ७, १३†; ११,५; काठ १६, १३†; १८,१०; क २५, ४†; २८,१०; पै ११,६,६†; –तिम् ऋ १, ३३, २; ५,२, ६; १०, १२७, ४; शौ ७, १०१, १; पै २०, ३३, ४; –तीः ऋ १, २५, ४; –तेः ऋ १, १२४, ⌊१२; ६, ६४,६⌋; खि ३, १९, १; शौ ६, ८३, १; पै १, २१, २; १९, १३, ९[e]; –तौ ऋ १, ३१, १५; ९, ६२, १५; –त्या[f] ऋ १, ६६, ५.

वासतेय[g]– -यः शौ ८,१०, ७; पै १६,१३३,४.

वसती[h]–>वसती-व(न्>)री[i]– -रीः तै ६, ४, २, १[३]; २[२]; ३, ४[२]; मै ४, ५, १[२]¶; काठ ३,९; क २,१६; -रीणाम् तै ६, ४, २, १¶; '–रीभिः मै ४, ५, ५¶; –¶रीषु मै ४, ५, २[२]; काठ ३४, १५.

वसतीवरि-त्व– -त्वम् तै ६, ४, २, १¶.

वसर्–>?वसर्-हा[j]– -हा ऋ १, १२२, ३; तै २, १, ११, १; काठ २३, ११.

१वसव्य[k]– -व्ये कौ १, २९८; जै १, ३१, ६.

१वस्मन्[l]– -स्मनः ऋ २, ३१,१.

१वावसान[m]– -ना ऋ १,४६,१३.

१वास[n]–>वास-मथ[o]– -थम् पै १४,४,१५[p].

वासयित्वा मै ४,२,९¶.

१*वासस्[n]–>?वासो[q] शौ १९, ५०,५.

१वास्तव्य[r]– -व्यः तै ५,२,८, ५¶.

१वास्तु[s]– -स्तु ऋ ८,२५,५; तै ३, १, १०, ३¶; ¶काठ ८, ५; क ७, १¶; शौ ७, ११३, १; –स्तुषु शौ १२, १०,३; पै १६,

---

a) नाप. (वसत्- ⌊प्राणिन्-⌋)। कर्तरि विच् प्र. (तु. वें. सा. GRV. प्रभृ.; वैतु. GW., ⌊पक्षे⌋ PW. प्रभृ. =गृह- इति)। ?ORN. विशाम् इति शोधः सुविवेचः।

b) RW. कृशितम् इति ?। c) नाप. (गृह-, नीड-)। अधिकरणे अतिच् प्र. (पाउ ४,६०)।

d) तु. वें. सा. GW. प्रभृ.; वैतु. PG ⌊१, ४९⌋, GRV. विप. सत् =निवासकृत्- इतीव ?। सस्थ. रण्वो इति =रण्वा उ इति कृत्वा पृ २६२८ पपा. अनु यद् रण्वः इति निर्देशस्तत्र शोधः द्र.। e) पाभे. पृ २५६९ *m* द्र.।

f) वैतु. या ⌊१०,२१⌋ सा. नाप. सत् (निवासवत्त्वात्) स्थावर- (ओषधि->औषधाहुति-)?। सस्थ. ?वश्रराधा वयं> *अस्र्ज-राध्- ⌊नाप. काष्ठाऽऽज्य-चर्वादि-दीप्तिवर्धक-पदार्थ-⌋> ⌊प्र३⌋ °राधः सायम् इति शोधः। 'तम् (अग्निम्) इद्धं (सन्तं) *अस्र्जराधः नक्षन्ते (प्राप्नुवन्ति ⌊तत्रोपाश्रिता भवन्ति⌋) न (यथा) *सायं वसत्या (निवासाय) गावः अस्तम् (उपाश्रयन्ति)' इति वा.। पृ १३१४ टि. *l, m* यदुक्तं, तत्र शोध इष्टः।

g) विप.। तत्रसाधवीयः ढञ् प्र. (पा ४,४,१०४)।

h) स्त्री. ङीप् प्र. (पावा ४,१,४५)। भा. ⌊पक्षे⌋ संहितादीर्घ इति ?।

i) नाप. (रात्र्युषिता- ⌊२अप्-⌋)। मत्वर्थे वनिः प्र. (वैतु. भा. वनिप् प्र. इति स्वरविरोधाच् चिन्त्यम्)।

j) नाप. (*वसुधा-)। वसर्–(भाप.)> *वसर्-धा– >यनि.। 'परिज्मा (विशाला) वसर्हा नः ममत्तु' इति वा. (वैतु. °हन्–>-हा इति कृत्वा वें =आच्छादकतमो-हन्तृ- ⌊आदित्य-⌋ इति; वायु-पर्याय इति मत्वा PW. GW. प्रभृ. =उषसि शत्रु-नाशक- इति, GRV. °हा– ⌊उप. <√हा 'गतौ'⌋ >-हाः इतीव च)।

k) नाप. (गृह-)। वासु– (भाप.)> *वासमय–> यनि.। l) नाप.।

m) कानजन्तम्। वव° इति पपा.।

n) नाप. (निवास-)। o) विप. (निवास-भञ्जक- ⌊स्तेन-⌋)। उस. उप. <√मथ् 'भञ्जने'।

p) सपा. °थम् <> ?वासो इति पाभे.।

q) *वासो-मथ–>-थम् इति शोधः। बस. उप. भाप. सद् भेदन-पर्यायः (तु. सपा. पै ⌊१४, ४, ५⌋ वास-मथम् इति पाभे.)। तु. पृ २७८ *k* टि.; वैतु. अप ···अवासयः इति स-शोधः संबन्ध इतीव RW.।

r) विप. (चिर-जीविन्- ⌊कूर्म-⌋)। कर्तरि तव्यत् प्र. (पावा ३,१,९६ ⌊तु. भा. सा.⌋)।

s) नाप. (वसति-)। अधिकरणे तुन्(ण्) प्र. उसं. (पाउ १,७०)।

१४५, ११; –स्तूनि ऋ १, १५४, ६[a]; †काठ ३, ३[a]; २६, ५[a]; †क २, १०[a]; ४१, ३[a]; शौ ९, २, ४; ९; पै १६, ७६, ८[b]; –स्तोः ऋ ५, ४१,८; १०, ६१, ७; शौ ६, ७३,३; पै १९, १०,१०; –†०स्तोः ऋ ७, ५४, १-३; ८, १७, १४; तै ३, ४, १०, १[२]; मै १, ५,१३; कौ १, २७५; जै १,२९,३; –†०स्तोः ऋ ७, ५५, १; मै १, ५, १३; पै १, ८६, ३$; ७, ६, १०; २०,२२, १$; २; –स्तौ तै ३, ४, १०,३¶; मै १,५,१३[२]¶; पै ७, ६, ३.

वास्तु-पु[c]– -पाय मा १६,३९; का १७,६,३; तै ४,५,७,२; मै २,९ ७; काठ१७,१५; क २७,५

वास्तोष्-पति[d]– -तिः तै ३, ४, १०, ३¶.

वास्तोष्पतीय[e]– -यम् ¶तै ३,४,१०, ३[३]; ४.

¶वास्तोष्पत्य[e]– -त्यम् मै १,५,१३.

√वस् (आच्छादने) > वासि, वसथ मै ४, १४,१२‡[f]; वसत ऋ ५, ५२, ९; ६३, ६[f]; वसतै पै ५,९,७.

वस्ते ऋ ४, २५, २; ७, ६९, ५; ८, ४६, २६; तै १, ८, ७, २¶; मै ४, १४, १०†; शौ १०, ८, ३६; १३, ३, १; वस्ते ऋ ३, ५५, १४; ६, ४, ३; ७५, ११; १०, ११४, ३; मा २९,४८†; का ३१, २, ८†; तै ३, २, २ २; ४, ६, ६,४†; मै ३, १, ५¶; १६, ३†; †काठ १७, १८; ४६, १; शौ १३, १, १६[२]; पै १, ७६, ३?[g]; १५, ११, २†; १६, १५१,१?; १८, १६, ६[२]; २६, ४; वसाते मा १९, ८९; का २१, ६, १०; मै ३, ११, ९; काठ ३८, ३; वसते[h] ऋ १०,८८, १९; वसते[i] शौ १९, २०, २; वसते[i] पै १, १०८, २; वसते ऋ १०, ६३, ४; १३६, २; पै ५, २७, ५?[j]; ३८, २†; वस्त ऋ १,२५, १३; †वसाथे ऋ १, १५२, १; मै ४, १४,१०; वसिष्व>ष्वा ऋ १, २६,१; वसिष्व ऋ ८,७०,१०; अवस्त शौ १४,१,५६; पै १८, ६,४; अवस्थाः[k] ऋ ३,३२,११; वसीय काठ ५,४; वसीमहि ऋ ९, ७२[८ (१०७, २१; २४)]. †वावसे ऋ ८, ४, ८[l]; कौ २, ९५६; जै ४, २०,२; †अवसिष्ट ऋ ९, ८९, २; जै ४, १९, ८; †वसिष्ट ऋ २, ३६,१[m]; ९, २, ३; कौ २,३८९; जै ३,३१.९.

वासयामसि ऋ ९, ३५, ५; ४३,१; वासयः ऋ ६, ३५, १; वासय> या ऋ १.१४०,१.

†वासयिष्यसे ऋ ९, २, [(१४, ३) ४; ६६, १३]; कौ २,३९०; जै ३, ३१, १०.

√वसाय[n], वसायते ऋ ९, १४, [२, ४ ७३].

उपमाण[o]– -णः[p] ऋ ४, २२,२.

---

a) पाभे. पृ १७१५ *p* द्र.।

b) BKA. वस्तूनि इति ?।

c) विप. (रुद्र-)।

d) नाप (रुद्र-)। षस. ष. अलुक् द्र.।

e) विप. (होम-)। सास्यदेवतीयः यथायथं छ>ईयः, यः प्र. च।

f) सपा. वसथ <> वसत इति पाभे.।

g) पाठः? *यश्च *दहाद् धृदयं नोऽभिवरो इति पाद-शोधः। एतदनु पृ १७८९ *j* यदुक्तं तन्नेष्टम्।

h) अनुदात्तत्वात् लसा. निघाते धा. स्वरः।

i) परस्परं पाभे.। RW. पै. अनुसरतः। स्वर-कृते तु. MVS [४६० टि ४]।

j) पाभे. पृ १५४५ *e* द्र।

k) तु. सा. PW. प्रभृ.; वैतु. वें. < अव √स्था इति ?।

l) तु. सस्थ. टि. अनु। पपा. वव॰ इति।

m) तु. वें. सा. ORN. (वैतु. GW. Arnold [KZ ३७,४६४] अवसिष्ट [॰नोऽव॰] इति पिपठिषू।

n) पपा. नावग्रहः। आयः प्र. उसं. (पा ३,१,१८ [वैतु. GW. नाधा. < वस- यद्वा वसा- इति])।

o) तुदा. शानजन्तम्।

p) विप. (*वसान– [इन्द्र-])। धा. तुदा. उसं. संप्रसारणम्। 'यः वृषा वृषन्धिम् अश्मानं (*वज्रं) शवसा बिभ्रत्. बाहुभ्यां चतुरश्रि* (सर्वदिक्) *वृष्यन् (उद्गूरयन् [च]) श्रिये (*छादनार्थं) ऊर्ण्यां *वरुण्णीं (आवरणिकाम्) उपमाणः एति' इति नापू. मन्त्रेणाभिसंबद्धः वा. इति कृत्वा सस्थ. ?चतुरश्रिमस्यन् > ॰श्रि (√वृष् "*बलप्रदर्शने' > वृष्यन् इति, ?पुरुष्णीम् > वरु॰ इति, ?ऊर्णाम् > ऊर्ण्याम् इति च शोधाः [वैतु. पपा. प्रभृ. यनि. ?])।

†वसन[a]- -ना ऋ १,९५,७; पै ८, १४, ७; १५, १२, ५.

वसान,ना- -नः ऋ १, १३५, २[२]; १६४, ⌊३१; १०, १७७, ३⌋; २, १०, १; ३०, ३; ३५, ⌊(१, ९५, ५)९⌋; ३, १, ५; ३८, ४; ४, ५, १५; १८, ५; ५, ४३, १३; ४८, ५; ६, २९,⌊३; १०, १२३, ७⌋; ९, ७, ⌊४[b]; (६२, २३)⌋; ४२, १; ७८, १; ८०, ३; ८२, २; ८३, ⌊५; ८६, ४०⌋; १४; ९०, २; ९६, १३; ९७, २; १२; ४७; १०७, ४; १८; २६; १०, १, ६; १६, ५; ५३ ३; मा १३, ३१; १६, ५१; ३३, २२†; ३७, १७†; का १४, ३, ५; १७, ८, ५; ३२, २, ५†; ३७, ३, ४†; तै १, ३,१४,२†; ८, १२, १[c]; २, ५, १२, १†; ३, २, २,२; ४ ५,१०,४; मै २, ७, १६; ९, ९; †४, ९,६; ११, १;१२,४; काठ २, १५†; ११, १३†; १५,६[c]; १७, १६; ३७, ९†; ३९, ३; क २७, ६; †कौ १,५११; ५२८; ५३२; २,२५; ३७१; ६६८; ७५०; ७५८; ११९३$; ११९५; ११९७; †जै १,५३, १;५४,८; १०; ३, ३, ४; ३०,१४; ५५, ९; शौ ४, ८, ३†; ९, ४, ७; १५, ११†; १०, २,७; ११, ७,५; ६; १४, २, ४४; १८, २,१०†; ४,३१; पै ४, २, ३†; १६, २४,८;५९, ८; ६८, १०†; १५०, ९;१५१, २; ६; १५३, ५; ६; १८, ११, ४; -नम् ऋ १, १५२, ४; ९, १६, २; १०९, २१; पै २०,९, ५[d]; -ना ऋ १,१२२,२;१२४, ⌊(११३, ७) ३⌋; ३, ३९, २; शौ ३,१२, ५; ९, ३,१७; पै १, १०३, १[e]; ३, २०, ५; ६,१०, ५; ७, ६,९; १६,४०,७; -नाः ऋ १,१६४,७;४७;३,८,९;३८, ७; ७,९७,६; ९,९४,४;१०,५, २; मा १०, ७[c]; का ११, ४, ३[c]; तै ३,१, ११, ४†; ४, ३, ११,२; मै १,६,२;७;२,६,८[c]; १३, १०; ४,१२, ५†; काठ ७, १४; ११,९†; १३†; १७,१८†; ३९, १०; क ६, ३; शौ ६,२२, १†; ७, ४१, २[d]; ९, १४, ५†; १५, २२; १३, ३, ९†; पै १३, १४, १; १६, ६६,७; ६९,१३; १९, २२, १०†; -नाम् शौ ९, १, १; पै ७, ६,५; १६,३२,१; -ने शौ १३, ३, ११; -नौ मै १, ६, ४¶; पै २०.२२, ४.

वसि- > वस्य(सि-अ)ष्टि[f]- -ष्टिः[g] तै ३, ५, २, ५; ४,४,१,३; ५, ३,६,३[२]; काठ १७,७;३७,१७; क २६, ६; -ष्टिम्, -ष्ट्या, -ष्ट्यै मै २,८,८.

वसुक[h]- -कः तै ३, ५, २,५; ४, ४,१,३; ५,३,६, ३[२]; काठ १७, ७; ३७,१७; क २६,६; -कम्, -काय, -केन मै २,८,८.

वस्तृ- -स्ता ऋ ३, ४९, ४; पै २, ८७, ५.

वस्त्र[i]- -स्त्रम् तै १, २, ३,२; शौ १४, २,४१; ४२; पै १८, ११, १; -स्त्रा ऋ १, १३४, ४; ५, २९, १५; ४७, ६; ६,४७,२३; ८, १, १७; ९, ९६, १;९७,२; ५०; १०, १०६, १; †कौ १, ५३३; २, ७५०; ७७७; जै १, ५५, १†; शौ ९, ५, २५; १२, ३,२१; पै १७,३८,१; -स्त्राणि ऋ १, २६, १; १५२, १; ३, ३९, २; ९, ८, ६; १०, १, ६ मै ४, १४,१०†; कौ २,५३३†; जै ३, ४१, ९†; शौ ५, १, ३; पै ६,२,३; -स्त्रेण ऋ १,१४०, १; शौ १८, २, ५२; -स्त्रैः ऋ २, १४,३; मै ४. १४, ५†.

वस्त्र-दा[j]- -दाः ऋ ५,४२,८.

वस्त्र-मथि[k]- -थिम् ऋ४,३८,५

२†वस्मन्[l]- -स्म[m] ऋ ४, १३,४;

---

a) नाप. (वस्त्र-)। b) पाभे. पृ २०७० i द्र.। c) सपा. °नः <> °नाः इति पाभे.। d) सपा. °नम् <> °नाः इति पाभे.। e) सपा. शौ ७,८४,३ दुहाना इति पाभे.। f) भाप. (रक्षणवत्ता)। (√वस् 'आच्छादने =रक्षणे' > भावे) वसि- + अष्टि- (भाप. =प्राप्ति-) > बस. यनि. (तु. सस्थ. टि. वसुक-, जरदष्टि- प्रभृ. च सा. पाभे. च; वैतु. PW. GW. WAG ⌊२,५५ d⌋ पूप. वस्यस्- इति)। पपा. नावग्रहः। g) =सपा. बौश्रौ १४,२०:१२ प्रभृ.। काठ ३७,१७ वस्वष्टिः इति पाभे.।

h) विप. (छादक =रक्षक- ⌊यज्ञ-⌋), भाप. [छादन- =रक्षण- (तु. सा ⌊तै ३,५,२,५ तांब्रा १,१०,११⌋, BW. प्रभृ.; वैतु. भा., सा. ⌊अन्यत्र⌋, K. < वसु- इति?)]।

i) =२वासस्। नाप. करणे ष्ट्रन् प्र. (पाउ ४,१५९)।

j) विप.। उस. उप. √दा 'दाने' + विच् प्र.।

k) विप. (तायु-)। उस. उप. √मथ् 'अपहरणे' + इन् प्र.।

l) नाप. (तु. वें. PW. GW. प्रभृ.; वैतु. सा. =१वस्मन्- इति)। करणे मनिन् प्र. (पाउ ४,१४५)।

m) सपा. तैब्रा २,४,५,५ आपश्रौ १६, ११,१२ हिश्रौ

मै ४, १२, ५; काठ ११, १३.
२वावसान[a]- -नस्य ऋ १,५१, ३[b]; -नाः ऋ ६, ११,६.
वासयत्- -यन्तः ऋ ८, १, १७.
२वासस्[c]- -सः ऋ १, ११५, ४[d]; १६२, १६; ७, ७७, २; ८, ३, २४; ९, ८९, २; १०, ८५, ६; ९७,४[e]; १०२, २; मा २, ३२[f]; ११, ४०; १२, ७८†[e]; २५, ३९; ३३, ३७†; का २, ७,४[f]; १२, ४, ३; १३, ६, ४†[e]; २७,१४, १; ३२, ३, ८†; ¶तै १, ५, २, ४; ८, १, १; २; २, २, ११, ४; ४, ९, १; ५,५,६; ४, १, ४, १$; ६, ९, २†; ५, १, ५, ३; ७, ५, १; ६, १,१, ४; ३, २; ९, ७; १०-११, २; ¶मै १, ७, २; ९, ४[2]; ११,८; २, १, २; ३-४,५; ६, १[2]; $; ७, ४$; ३, १, ५[2]; ६, २; ६[2]; ७; ७, ४; ८; १६, १†; ४, २, ७; ३, १[3]; ४, ८; ८, ३[2]; १०, २†; ¶काठ ८, ८[2]; १५; ९,९; ११; १२[2]; १४; ११,१०; १२, ४; १४, ७; १५, १[2]; १६,४$; १९, ५[3]$; $२२,१३; २३,१[2]; २४, ६; २८, ५; ४६, ५†; ¶क ७, २[2]; ८,३; १२; ३०, ३[2]; $; ३५, ७[2]; ३७,७; ४४, ५; जै ४, १९, ८†; शौ २,१३, २; ३; ५; ८, २, १६; ९, ५, १४; २९; १०, २, १५[g]; १२, ३, ५१; १४, १, ७†; ३०; ४५; ५३; २, ४१; ४२; ५१; १५, २,५; १३; १९; २५; १८, २, ५७[h]; ४, ३१; १९, २४, ४-६; २०, १२३, १†; पै २, २८, २?[i]; ८, ३, १३†[e]; १०, ६, ७; १३, १४, १; १५, ६, १-३; ६; ८; ९; ११, ३; १६, ४, ६; १८, ४; १७, ४१, १; १८, १, ७†; ३, ९; ५,२;१०; ११, १; २; १०; १९, ४९, ६; -ससः ऋ १, ३४, १; शौ ६, १२४, २[j]; १४, १,२७‡[k,l]; २, ५०; पै ९, ७,८; १८, ३,६‡[l]; १३, ७; -ससा ऋ ९, ६९, ५; १०, ८५, ३०[l]; ¶तै ६, १,१, ३; ४; ९, ६; १०-११, २; ¶मै ३,७,७;८; काठ २४,६¶; क ३७, ७¶; शौ ७, ३८, १; १८, २, ५१; पै १६, ६०, ६[g]; -ससी तै १, ५, १०, १; ८, १८, १¶; काठ ७, ३; क ५, २; -ससे पै १९, ४९, ५; -सांसि ऋ १०, २६, ६; काठ १२, ४¶; शौ ९, ५, २६.
वासः-पल्पू(ल>)ली[m]- -लीम् मा ३०,१२; का ३४,२,४.
वासो-दा- -दाः ऋ १०,१०७,२.
वासो-वाय[n]- -यः ऋ१०,२६,६.
वास्य- -स्यम् मा ४०, १; का ४०, १, १.

√वस्(बधा.)[o]>वासि, वस्ते[p] ऋ ५, ४९,३.
उवास ऋ १, ४८,३; उवास ऋ १०,११, ३[q]; शौ १८, १,२०†;
ऊषुः ऋ ३, ७,१०; ऊष ऋ ४, ५१,४; †अवस्त्रन् ऋ४,२,१९[r];शौ

---

११,४,१२ वस्वः इति पाभे. । a) कानजन्तम् । पपा. वव° इति । b) वैतु. वें. <√वस् 'निवासे' इति ?। c) नाप. [वस्त्र-] । करणे असुन् प्र. । d) वैतु. या ४,११, [पक्षे] वें. सा. प्रभृ. √वस् 'दीप्तौ' > यनि. इतीव कृत्वा वासर- (अहन्-) इति ?। e) सपा. शौ ४,९,७ अहम् इति पाभे. । f) =सपा. मंब्रा २,३,१४आश्रौ २,७,६ । आपश्रौ १, १०,१ हिगृ २,१२,८ °सांसि इति पाभे. । g) सपा. वासः <> वाससा इति पाभे. । h) =सपा. कौसू ८०, १७ । तैआ ६,१,१ आग्निगृ ३, ५,२ : ६ वस्त्रम् इति पाभे. । i) पाठः नष्टः (तु. सपा. शौ [६, ७१, १]; वैतु. सपा. तैआ [२,६,२,] यत्र यनि. श्रूयते अश्वम् इति तु न श्रूयते ?) । सस्थ. ? हिरण्यम् > (*हिरण- [=*हरिण-] >) °णम् इति शोधः । एषोऽपपाठ इहाधिकपाठे बीजम् (तु. वासु [=*वसु] इति मूको. [यतः यनि. विपरिणतं स्यात्]) । j) सपा. आपमं २,२२,११ हिगृ १, १९,७ वासः इति पाभे. । k) RW. °सा इत्येव । l) परस्परं पाभे. । m) नाप. (रजक-स्त्री-) । उस. उप. <√पल्पूलि [तु. पृ १९६७ g] । n) विप. (पूषन्-) । उस. उप. √वे + अण् प्र. । o) √उच्छ्, √वश् इत्येताभ्यां साजात्यं द्र. । p) धा. *दीप्तौ वृत्तिः । वाक्यादौ तिङोऽनिघातः । 'उस्राः (*सूर्यः) वस्ते (देदीप्यते)' इति वा. (तु. पृ ९८१ h; वैतु. सा. प्रभृ. धा. आच्छादने वृत्तिरिति, Old [ZDMG ५५, २८४] वस्तोः उस्राः [=प्रति वस्तोः] इति शोध इति च ?) । q) दीप्ति-महत्तादिषु धा. वृत्तिः । r) वैतु. वें. सा. <√वस् 'आच्छादने', सा. [शौ.] = अवस्वन् [सं१] इति ? ।

१८, ३, २४†.

वासयथः ऋ ६, ७२, २; वासय ऋ १, १३४,३[2]; अवासयत् ऋ ६, ३२, २; †अवासयन् ऋ ७, ९१, १; मै ४, १४, २; अवासयः ऋ ६, १७, ५.

२वस्[a]- > १वसिष्ठ,ष्ठा[b]- -०ष्ठ ऋ ७,१,८; -ष्ठः ऋ २,९,१; १०, ९५, १७[c]; मा ११, ३६†; का १२,३, ९†; तै २,२, ११,६¶; ६, ७, ३; ३, २, ५, ६; ४, ८, १¶; ५, ११, २†; ४, १, ३, ३†; मै २, ७, ३†; काठ १६, ३†; शौ ६, ११९, १; ७, ५५, २; पै ३, २७, ६; १६, ५०,६; २०, १०,७; -ष्ठम् शौ ६,२१, २; ४४, २; पै १, ३८,२; १०, ६,१०;२०,३३,८; -ष्ठा पै १५, २०,६; -ष्ठाः तै ३,२,५,६.

वसीयस्[d]- -यः मा १८, ८[e]; का १९, ३, ४[e]; तै २, ५, ४, १¶;३,१,९,२[f]; मै १,३,३९[g]; २, ११,३[e]; ४, २,६¶; -यसः मै १, ५, ९; ३,८,५; ४,५,५[h]; काठ २७, ५; क ४२, ५;-यसे मै १,५, ८¶; -¶यांसः तै ६, ५, ६,१; काठ ९, १२; २३,९; २४, ९[2]; क ३६, ६; ३८, २[2]; पै १०,४,८$; -¶यांसम् तै ५, ४, ४,५; १०, ५; ६, १, ३,३; काठ २७, ५; क ४२, ५; -यान् ¶तै $१, ६, ६, २; ७, ६, ४; २, ५, ४, ५; ६, ६, ३; ४; ३, १, ६, १[2]; ७, ३; २, ७, ३[2]; ४, १, ४; ५, १, १, २[2]; ४, ५; २, ८, ४[2]; ५, १०, ७; ७, १, १[2]; ४, २; ६, ३, २,६; ¶मै १, ४, १२[4]; १३; ६, ४; ८[3]; ८,४; ८; ९; २,२, ७[2]; ३, ३, २; ४,८; ९, ७; ¶काठ ६, १[2]; ७; ८; ७, ४; ५[2]; ८, १; ९, १२; ११, ४[3]; १३,३; १८, १९[2]; १९, ४; २३, ९; २५, ७[2]; ३२.४[2]; ७; ३४,१०; ३७, १७; ¶क ३,१२[2]; ४,६; ५,३; ४[2]; ६,६;२९,७[2];३०,२;३६,६; ३९,५[2]; पै १६, ११९,२[i]; ३[j].

वसीयसी- -०सि मै ४, २, ५; ६; ७[4].

¶वसीयो-भूय[k]- -यम् मै १, ४, १०[2]; काठ ३२, ७[2].

वस्यस्[l]- -स्यः ऋ १, ३१,१८; १०९,१; १४१,१२;२,१, [१६; २,१३]; ९,२;३९,५;४,२१,४; ५,३१, २; ५५,१०; ६,४४, ७; ४७,[७; ८,७१,६; १०,४५,९]; ६१,१४[m]; ७,३२, १९; ८,१६, १०; २१,९; २७,२२; ४८,९[n]; १०,९२,१३; मा १२,२६†; का १३, २,९†; † तै ३,५,११, ३; ४,२,२,३; ७,३,१$[o]; ७,२,७, ४;†मै २,७,९;४,१०,४;११,२; १४,३; काठ ४,१३[g]; ८,१७†; १५,१२†; १६, ९†; १७,१८†; १८, ८[o]; ३०, ३†; ६[f]; क ३, ११; २८, ८[o]; ४६, ६†; †कौ १, ४००; २, ११४७; †जै १, ४५, २; ४, ५, ३; शौ ६,४७, ३[f]; ७, १०८, १; †२०, १४, ३; ४६, १; ६२, ३; ८२, २; पै १९, ४३, १२[f]; २०, ३, ५; -स्यसः ऋ २, १७, ८; ४, २, [२०; ८,४८,६]; ८,९१, ४;९, ४,[१-१०]; मा ३.५८[o]; का ३, ८,२[o]; तै १, ८, ६, २[o]; ७,२, ८, ७¶; मै १, १०, ४[o]; काठ ९,७[o]; क ८,१०; †कौ २,३९७-४०६†; जै ३, ३१, १७-२६†; पै ४, २६, ३†; -स्यसा ऋ ८, २०, १८; -स्यसाऽस्यसा ऋ १०, ३७, ९; -स्यसे तै ६, ५, १०,३[3]¶; -†स्यान् ऋ ६, ४१, ४;८,१,६; कौ १,२९२; जै १, ३०,१०.

---

a) =दीप्त- । कर्तरि विच् प्र. ।
b) विप. (दीप्तिमहत्तादिविशिष्टतम- [अग्नि- प्रभृ.])।
c) धा. कामे वृत्तिरिति PW. प्रभृ. ।
d) विप., नाप. (दीप्तिमहत्त्वादिविशिष्टतर-)।
e) सपा. वसीयः <> वस्यः इति पाभे. ।
f) सपा. वसीयः (काश्रौ १०,३, २२ च) <> वस्यः (माश्रौ २५,४,१७) इति पाभे. ।
g) वशीयः इति सात. । =सपा. आपश्रौ १३, २१,३ माश्रौ २, ५,४,३७ । काठ ४, १३ वस्यः इति, आश्रौ ६, १३,१४ वस्वः इति च पाभे. ।
h) सपा. काठ २७,२ क ४२,२ श्रेयसः इति पाभे. ।
i) अ-वसु- > अवसीयस्- > -यान् इति शोधः ।
j) *न-वसु- > नवसीयस्- > -यान् इति शोधः ।
k) उस. उप. √भू + भावे क्यप् प्र. ।
l) तु. तव्यस्-, नव्यस्- ।
m) =सपा. आश्रौ ३,७,६ । पै ३,२७,३ वसु इति पाभे. ।
n) विप.(*मर्षणशील [सोम-])। <√*वस (=√मृष्) 'सहने' इति मतम् ।
o) =सपा. बौश्रौ ५, १६:१५ । लाश्रौ ५, ३, ५ वसीयसः इति पाभे. ।

वस्यसी- -सी ऋ ५, ६१, ६; -सीम् तै ७, ४, २, २¶.

व(स्यः>)स्य-इष्टि[a]- -ष्टये ऋ १,२५,४; १७६,१; ८,८६, २; ३.

वस्यो-भूय[b]- -याय शौ १६, ९,४; पै १८, २९,५.

*वस[c]->वसवान[d]- -०न ऋ ५, ३३,६?[e]; १०,२२,१५; -नः ऋ १,१७४,१; -नम् ऋ ८, ९९, ८; -नाः ऋ १,९०,२.

१वसन्त[f]- -न्तः ऋ १०, ९०, ६; मा १०, १०; १३, ५४; ३१, १४†; का ११, ५, १; १४, ७, १; ३५,१,१४†; तै ४,३,२-३, १; ५,७,२, ४;६,६¶; मै ¶१, ८,२; १०, ८; २, १, ४¶; ७, १९; २०; ४, ९, १८; काठ ६, २¶; ¶८, १; ६; १०, २¶; १३, १५; १६, १९; ३४,९[२]¶; ३५,९; ३६, ३¶; ३९, ७; क ४,१¶; ६,६¶; ७, २¶; २५, ९; ४८,१०; कौ ३,४,२; जै २, ३,३; ४, १†; शौ ६, ५५, २; १२, १, ३६; १५, ३, ४; १९, ६,१०†; पै १, १०६,३; ९,५, ८†; १७, ४, ६; १९, ९, ३; -न्तम् तै १,६, २, ३; ११, ४; २,६,१, १¶; काठ ४,१४; ३१, १५; ३४, ९¶; -न्तस्य काठ ४.१४; -†न्तान् ऋ १०,१६१, ४; शौ ३,११, ४; २०, ९६,९; पै १, ६२, ४; -न्ताय मा २४, ११; २०; का २६, ३,१; ४,५; तै ७,२, १०, १¶; मै ३, १३, १९; १४,१; काठ ५०,४; ५१, १; शौ ८,२,२२; पै १६, ५,२; -न्ते ¶क ६, ६[g]; ३९, १[h]; -न्तेन मा २१, २३; का २३,३, १; तै ५, ६, १०, १¶; ७, १, १८,१; मै ३,४,८¶; ११,१२; काठ २२, ४¶;३८,११;४१,९.

वासन्त[i]- -न्ताः तै ५, ६, २३,१; काठ ५०, ३; -न्ताय[j] तै ७,५,१४, १; काठ ४५,१०; -न्तौ शौ १५,४,२; ३; पै १७, २९,११.

वासन्ती- -न्ती मा १३, ५४; का १४,७,१; तै ४, ३, २,१; मै २, ७, १९; काठ १६, १९; क २५, ९.

वासन्तिक[k]- -कम्[l] खि ५, २२, ३; शौ २०, १३६, ३; -काय मै ३, १५, १०[j]; -कौ मा १३,२५[२]; का १४,२, ११[२]; तै ४,४,११,१; मै २, ८, १२[२]; ४,६,७¶; काठ १७,१०[२]; ३५, ९; क २६, ९[२]; ४८, १०.

¶वसन्ता-शिशिर[m]- -रे मै १, ६,३;८,२[n].

२वसन्त[o]- -¶न्ता[p] तै २,१,२,५[२]; ४,१; २; मै १, १०, ७[२]; २,१, ४[२]; ५,२; ¶काठ ८, १[g]; १०, २[२]; १३,१;७; २१,७; २५,४[h]; ३१, १५?[q]; ३६, २[२].

a) षस. पूप. स्वरः (पा ६,२,४२)।

b) तु. वसीयो-भूय-।

c) भाप. (शक्तिदीप्त्यादि-)।

d) विप. (शक्त्यादिमत्- ⌊इन्द्र- प्रभृ.⌋)। मत्वर्थे वानप् प्र. (तु. टि. भृगवाण-); वैतु. वें. सा. =⌊√वस् 'आच्छादने' > शानचि⌋ *वसमान->यनि. इति, स्क. PW. प्रभृ. =वसु->*वसुवान->यनि. इति च?)। पपा. नावग्रहः।

e) °न उ इति द्वि-पदः शोधः (तु. Gri; GRV., ⌊पक्षे⌋ ORN.; वैतु. पपा. सा. GW. प्रभृ. =°नः इति?)। सस्थ. वसु->?वस्वः इत्यत्रापि टि. द्र.।

f) नाप. (तदाख्य-ऋतु-)। <√वस् '*वृद्धौ =प्ररोहे' (वैतु. पाउ ⌊३,१२८⌋, भा ⌊तै.⌋अभा. प्रभृ. 'आच्छादने' इति, अर्वाञ्चः 'दीप्तौ' इति च)।

g) सपा. वसन्ते<>वसन्ता इति पाभे.।

h) समा. वसन्ते<>वसन्ता इति पाभे.।

i) विप.। तस्येदमीयाद्यर्थे अण् प्र.।

j) सपा. वासन्ताय <> वासन्तिकाय इति पाभे.।

k) विप.। ठञ् प्र. (पा ४,३,२०)।

l) वासन्तिकम् इति पाठः (तु. शंपा. सात. च)? यनि. शोधः (तु. RW.)।

m) समाहारे द्वस. पूप. दीर्घः (पा ६,३,१३७)।

n) सपा. काठ ६,२ क ४,१ शिशिरे इति पाभे.।

o) =१वसन्त-। ञः प्र. इति ततो विशेषः।

p) =सप्त१ (तु. सपा. क. वसन्ते इति पाभे.; वैतु. प्राञ्चः पा ⌊७, १, ३९⌋ अनु १वसन्त- इत्यत एव सप्त. स्थाने आल् प्र. लित्वात् यनि. स्वरं विपरिणामुका इति, WAG ⌊३, ४५⌋< *वसन्- (=वसन्त-)+ता प्र. इतीव च?)।

q) वा, सन्तः इति द्वि-पदः शोधः (तु. सप्र. मै १,४, ११; वैतु. Sch ⌊टि.⌋ यनि. इति?)।

वसु[a]– -सवः ऋ ३,८,[८; ७,३५,
१४ (१०, ६६, १२)]; ५, ४१,
९; ६, ५०, [४; १५]; ७, १,२;
५,६; ११, ४; ३८, ३; ३९,३;
४८, ४; ५६, २०; ८, ५४, ३;
९, ६७, २७[b]; १०, १२८, ९;
१४२, ६; खि ३, ६,३; ५, ७,
१,५; २०,४; मा २,५; ९,३४;
११, ५८; ६०; ६५; १२, ४४;
१४,२; २०; ३०;१५,१०; २१,
२३; २३,८;३४, ४६†; का २,
१,७; १०, ६, ४; १२, ५, ९;
११; ६, ५; ७, १९; १३, ३,
१५; १५, १, २; ५,६; ९,४;
१६, ३,१; २३, ३.१; २५,३,
४; ३३,२,९†; तै १, १, ९,३;
५,३,२; ७, ११, २; ३, ३, ३,
१;४,९, ७¶; ५, २, ३¶; ४,
१,५, ३; ६, १;३; २,३,४; ३,
७,२; १०, ३;४, २, १; १०,२;
७, १४, ४†; ५, २, २, ६; ३,
४, ३¶; ¶५,२, ५;९,४;६,७,
३¶;७,२,२; ७, १,५, २¶;३,
१३,१;४, २०,१; मै १,१,१०;
२,८; ७, १[३]; ११, १०[३]; २,७,
६[३]; १२;८, १; ३; ६; ९; ११,
५; १३, २०; ३, १, ७; ८; ४,
६¶; ११, १२;१२, १९; ४,१,
१०¶; ५,४¶; १३,२; काठ १,
९; २ ९; ७, ६¶; ८,१४[२]; ९,
१६¶; १४, ४[३]¶; १५, १३;
१६,५[२]; ६; १७, १; ३; ५; ८;
१९ ६[२]; ७; ¶२१, १; ५; २२,
७[२]¶; १०; २५, ५; २६, ९¶;
२८, ३¶; ३१, ८¶; ३३,७¶;
¶३४, ७; १६; ३५, ७; ३७,
१७¶; ३८, ११-१३; ३९, ३;
१३;१५†; ४३, ३; ४४, ९; क
१, ९; २, ३; ५, ५¶; ८, २[२];
२५, १०; २६, २; ४; ७; ३०,
४[२]; ५; ३१,२०¶; ३५, १[२]¶;
४; ३९,२; ४१,७¶; ४४,३¶;
४७,८¶; ४८,९; कौ २,७२४†;
जै ३, ५९, १७†; शौ १, ९,१;
३,१, २; ५, २७, ६[c]; ६, ६८,
१; ८, १, १६; ८, १२; १०,७,
२२; ९,८; १०,३०‡[d]; ३१‡[d];
११, ८, १३; १२, २, ६; १९,
६, ११‡[d]; ९, ११; ११, ४†;
२०, १३५, ९; पै १, १९, १;
१०१,२; २,८०, ३; ३, ६, २;
२४, २[e]; ९,५, ९‡[d]; १०, ३,
५;१३, ५, १७; ८, १४†; १५,
१४,६; १६,२,६; ३०,२; ७०,
३;७२,२; १०९,१०‡[d]; ११०,
१‡[d]; १३६,८; १७,९,३; ३०,
६; १९, १५, ६?[f]; १७, १३;
४०,१४; ५१, ३; ५३,१०-१२;
२०, ८, ९; –ॅसवः ऋ १०,
६६, १२; मा ३८, ६; का ३८,
१,६; मै १, ३, १; शौ १, ३०,
१; –०सवः ऋ १,१०६,[१-६];
१६३, २; २, ३, ४; २७, ११;
२९,३;३४,९; ३, ३९,८; ५७,
२; ४, १२, [६; १०, १२६,
८]; ५५, १; ५, ४१, १८;
५५, ८; ६, ५१, ५; [७; ७,
५२, २]; ६२, ८; ७, ५२,
१; ५६, १७; ५९,८[g]; ८, १८,
१५; १७; २७, २; ९; २०;
१०, ३७, १२; ७७, ६;
१००,७; ९; मा ८, १८; २९,
१३†; का ९, ३, ४; ३१, ३,
२†; †तै १,४, ४४,२$; २,१,
११,५; ४,३, १३, ३;६, ७,१;
७,१५,७; मै १,३,३८; ३,१६,
५†[h]; ४, ९, ७; १०, ५†[g];
†१४, ११; १४; काठ २,१५†;
३, ९; ४, १२;९, १९†; ११,
१२†; २१, १३†[g]; ४०, ६†; क
२,१६; ३,१०; शौ ४, २७, ६;
७, ८२, २†[g]; १०२, ३; पै १,
९७,१[२]; ४,२८, १-६†; ३५,६;
५,३९,८†; २०, ३४, ३; –सवे
ऋ ५, ३, १२; ९, ८१,३; १०,
९१,१२; मा ९, २०; १८, २८;
२२,३०; का १०, ४,१; १९,९,
१; २४,१७,१; मै १,११,३; ३,
१२,११; काठ १४, १; ३५, ८;
१०; क ४८, ८; ९; –सु ऋ १,
१०,६; ३१,९; ४०,[४; ५,३४,
७] ४१, ६; ४६, ९; ४७,
[३;६]; ९; ५१,३; ४; ५३, ३;
५५,८; ८१, २; ६; ७; ८४,[७;
(४५, ८;८, १,२२) ९,९८,४];
१७६, ३[i]; २, ५,१; १३, ११;

[a]) विप. (दीप्तिमत्- [देव-]), नाप. पुं. न. (धन-, रश्मि- प्रभृ.)। <√वस् ([बधा.] दीप्तिलाभप्रभृतिषु [तु. माश १४,२,१,२० निघ २,१० या १२,४१ प्रभृ.])।

[b]) पामे. पृ २४३६ *k* द्र.।

[c]) सपा. मा २७,१५ प्रभृ. वसुः इति पामे.।

[d]) पामे. पृ १०२० *b* द्र.। [e]) पामे. पृ २००६ *m* द्र.।

[f]) पाठः ? सपा. शौ ६,७४,३ वसुभिः इति पामे.।

[g]) पामे. पृ२२७२ *d* द्र.। [h]) वु॰ इति स्वरः ? यनि. शोधः (तु. सपा. ऋ ४,१२,६)।

[i]) संघार्थे यनि. <√वस् *संघाते, रूपं च प्र३ इति द्र.। 'क्षितीनां (मनुष्याणां) पञ्च वसु (संगतानि) विश्वानि (सर्वाण्यपि) यस्य (इन्द्रस्य) हस्तयोः (निवसन्तीति

२२,३; २३,९; ३,२,११; १३, ४; ७; ४५, ४; ६२, ३; ४,८, ३; ३१,२; ८; ५, १७,४; ५७, ३; ६, १, १३; १६, ३३; [२३, ३ (७, ९७, १०)]; ४७, २२; ४८, [१५; ७, ३२, २५]; १५; ५१, १६; ५३,२; ५४,४; ५९, ९; ७, १२, ३; १८,१; २०,२; ३२,१५; १६;२१; ५९,६; ९४, ९; ८, २,३५; ४, १६; ६,४१; १७,१०; २१,१७; २३,३; ३२, ८; ४०, ४; ६[a]; ४३, ३३; ४४, १५; ४५, [४०-४२]; ४६, १५; ५०,१; ५३,४; ६६,४; ६; ८८, ३; १००, ६; १०१, ६; १०३, ६;११; ९, १९,१; २२,७; ३६, [५;६४, ६]; ५७, ४; ८१, ३; ९०, १; १११, २; १०, २३,२; ३६, ११; ४५, ११[b]; ४८, ५; ४९,१; ५५, ६; ६२, २; ६६, १४; ७७,१; ८५, २९; ८६, ३; ९५, ४; १३३, ३; १३८, ४; १५१, ४[c]; खि ३, २, १; ५, ४; २२,८; ५,७,२, ११; ३,४; ४, १५; २१, १[d]; मा ४, १६[e]; २९†; ६,७; ८, ५; १२, २८[b]; १८, १५; १९, ८३; २०, १३; ६७; ७१; २१, ६१; २७, ४०; २८, १५-१७; ३६, ५†; का ४, ५,९[e]; ९,६†; ६,२,१; ८,२,१; १३,२,११†[b]; १९,५, ३; २१, ६, ४; ७, १४; २२, ७, १; ५; २३,६,१४; २९,५ ९†; ३०,२, ४-६; ३६, १, ५†; तै १,२, ९, १†; ३, ७, १; ५, १,१¶; २, ३[२]¶; २, ४, ५,१; ५,३, ७[२]¶; ३,२,८, ४; ४,७,५,२; ¶५,२, ४,४; ५, ३,३[२]; ६, ३, ६, २; मै १,२,५†; १५;४,१; २,११, ५; १३,९†; ३,७,७†; ८,३[३]¶; ९, ६; ११, ४[२]; ८; ९; ४, २, ४[२]¶; ११; ९, २७†; ११, २†; †१२, ३; ४; १३, ६†; ८; ९; १४,९; काठ २, ६†; १५†; ३, ४; ४, १५†; ५, ४[२]; ६, १०†; ७, १०[३]¶; १०, ६¶; १२†; १२,१५†; १६,९†[b]; १८, १०; २०†; १९, १३[२]; २५, २¶; ६¶; २६, ७; ३८, ३; ४; ९[२]; ३९, १; १२†; क १, १९†; २, ११; ५, ९[३]¶; २८, १०; ३८, ५¶; ३९,३¶; ४१,५; †कौ १, ४४;१३४; २०७; २७०; २९६; ३८९; ५३६; २, ३३; ३४९; ३५३;३८६; ४२०-४२२;६५६; ६९१; ८३७; ९३३; ९४२; १०३३; १११४; ११३३; ११५३; †जै १, ४, १०; १४, १०; २२, ४; २८,८; ३१, ४; ४३,९; ५५, ४; ३,४, ४; २९, ६; १०; ३१,६; ३२, १०-१२; ५४,६; ५६,१८;४,१,३;६; ७, ७;८;११,६;१८,८,१९,७; २७, ८; शौ १,९, १; ३, १४,२; ६, ७९,२; ७,४२,२;८४,३[f]; ९५, २†[a];१२०,२; १०,८,२०; १२, १,४४; १४,१,२५†;२,८; १६, ९,४[२]; १८, २, ६०; १९, ५०, ६; †२०,५,४; २१,३; ४३,१; २; ३; ५१,३; ५६,२; ४; ६३, ४; ९५,४; १२४, २; १२६, ३; १३५, ११$[d]; पै १, १९, १; ३९, २; ९६, १[g]; १०३,१; २, ५,७[h]; १३,१; ८७, ५; ३,२७, ३[i]; ५, २८,८; ८,१२,८; १४, ४, १६; १५, २१,९; १६,४२, ४?[j]; १०२, ७; १७, ३, १२; १८,३,४†; ७,९; २९,५; १९, ११, ६; १६, १८; २१, २; ३; ५; २०,९,१०;१७,८; –सुऽ-सु ऋ १०,७६,८; –सुः ऋ १,४३, ५; ६०, ४; ७९, ५; ९४, १३; ११०,७; १२८,६; १४३,६; ४, ४०,५; ५,६,१; २; २४,२;२५, १; ५१, १३; ६,२४, २; ४४, १५; ४५,२३; ८, १९,३७;४४, २४; १०३, १२; १०, २२,१५; ३२,८; ४५,५[k]; ९१,३; ११५, ७; खि २, ६[२], २०; †मा ३, २५; १०, २४; १२,१४; २२[k]; १५, ३६; ४१; ४२; ४८; २५, ४७$; २७, १५$[l]; †का ३,३, १७; ११, ७, ४; १३, १, १५;

शेषः)' इति वा. (तु. पृ १८२८ *h*, वसूनि [ऋ ६,४५,८] च)।

a) पाभे. पृ २४५७ *g* द्र.।

b) सपा. तै ४, २, २,४ आपमं २, ११, ३० वसूनि इति पाभे.। c) सपा. तैब्रा २,८,८,६ हविः इति पाभे.।

d) तु. शांश्रौ. RW.। सपा. शौ. वसुवनिम् (तु. शांपा. सात. च) इति पाभे.। तु. पृ १८२९ *d*।

e) पाभे. पृ १५५७ *l* द्र.।

f) सपा. तै ३,५,१,१ वसूनि इति पाभे.।

g) सपा. काठ ४०,५ आपश्रौ १६,३४,४ विभे.।

h) इमं गच्छतु ते वसु> सपा. शौ २, १२, ७ असुं वागपि गच्छतु इति पाभे.। i) पाभे. पृ २७७९ m द्र.।

j) वा. ? (तु. टि. पृ ११४ *g*)।

k) सपा. तै ४, २, २,३ आपमं २, ११,२७[२] वसोः इति पाभे.। l) पाभे. पृ २७८१ *c* द्र.।

२,५[a]; १६, ५, १८; २३; २४; ३०; २७,१५, २; २९,२,५$[b]; तै †१,४, ४६,२; ५, ६, ३; ८, १५,२; ३, २, १०, २[3c]; ४,१, ८, २[b]; २, १, ५†; †४, ४,५; ८;५,७, ३,२[2]¶; मै १,१,१३; ३,९[3];४, १;५,३†; २,६,१२†; ७,९†[a]; १२,६[b]; †१३, ७[2]; ८; ३,२,१†;४,२¶; ४,२,४¶; ४, ६†; †काठ ५,४$; ७, १; १५, ८; १६,८;९[a]; $१८, १२;१७[b]; ३२, ४$; ३९, १४;१५; क ५, १†; २९,१; ५[b]; †कौ १,११०; ४२५; २,४५८; ९१२; १०१७; १०८७;१०८९; †जै १,१२,४; ४१,७; ३. ३४, १६; ४, ९,८; १५,५; शौ २०, ७८,२†; पै २, ८५,२; ९,१,५[b]; १२,१,१३†; १५, ७,६; १६, ४६, ९; –सुनः ऋ १,५३, २; १०९, ५; १४९, १; २, १६, ७; ६, १९,५; ७१, २; ७,३७,३; ८,१,३१; ९,७२, ८; १०,४८,१; ५०,७; शौ २०, २१,२†; –सुना ऋ १, ८३,१; १२५,२; ३, ५५, २०; ४,२०, [६; १०, ४२, २]; ६, ३,७; ७, ३७,३; मा ५, १९[d]; का ५,५, ७[d]; तै १,७, १३,४[d]; मै १, ७, २[2]¶; काठ ८,१५¶; क ८,३¶; शौ ५,२८, ४; ७, १०३, १‡[e]; २०,२५, १;८९,२; पै १,१००, १;२,५९,२; –सुभिः ऋ १,५८, ३;११०, ७;१४३,१; ६;२,३१, [१; ८, ३५,१]; ३,१९,२; ४९, ४; ५,३,८; ५१, १०; ७,५, ९; १०,४; ३५,६; ४४, ४; ४७,२; ७६,२; ५;९०, [६; १०,१०८, ७]; ९,९३,३;१०,३,२;६६,३; ७९,७; ९८,१; ११०,३; १२५, १; १५०, १; खि ४, १,१; मा २,२२‡[e]; ४,२१; ५,११; ११, ५५; १४, ७; १८, ५६[f]; २०, ३९; २८,४; २९, ३; ८; २८†; का २,५, ५‡[e]; ४,७, १; ५,४, १; १२, ५,६; १५,२, १; २०, ३, ६[f]; २२, ४,४; ३०, १, ४; ३१, १, ३;८; ४,४†; तै १,२, ५,१; १२,२; २, १, ११, २[2]; ३; २,११, ५¶; ४, १, ५, २; ३, ४, ३; ५, ¶१, ११, २; ३; ६,८,६; ६, १,८,२; २,२,१¶; ७, ४[2]; ७, १, १८, १; मै १, २, ४; ८; ४, १; २, २, ६¶; ७, ५; ८, १; १२, ३; ३, ७, ६[2]; ¶; १०¶; ८, ५; ११, १; १६, २[2]; ४, ९, ५; १२, २[2]; १३, ३†; १४, ९; काठ २,५; १०, १२[2]; ११, ३¶; १६, ५; २०†; १७, १; १९, ६; २४, ४;९¶; ३८, ६; ४१, ९; ४६, २[2]; क १, १८; २५, १०; २९, ६; ३०, ४; ३७,५; ३८, २¶; †कौ २, ७७०;८९७, जै ४,१३, १०†; शौ २, १२, ४; ४, ३०, १†; ५,१२,३†; ६,७३,१;७४ ३[g]; १९,१०,६†; १७,१; २० १३१, ३[h]; पै २, ५,४; ३,२२, ६; ५,३७, ६;७, १६, १; १३, ८, ६†; १५, ५, ४[i]; १९, १०, ९; ३७, ११; २०, ३४, ९‡[e]; –सुभ्यः ऋ ५, ४९, ५; १०, ८७, ९; खि ५, ७, ४, १७; मा २, १६; १५, ६; २२, २८; २४, २७; का २, ४, २; १६, २, ३; २४, १४,२; २६, ६, २; तै १, १, १३, १; ३, ५, २, ३; ६, २; ४, ४, १, २; ५, ५, २, ५¶; ७, १, ५,२[2]¶; मै १, ११, १०; २, ८, ८; ३, ७, १०¶; १२, ७;१४, ९;१९; काठ १७, ७; २२, ७¶; ३०, ६; ७; ३७,१७;५१,१; क २६, ६; ३५, १¶; शौ ८, ३, ९†; पै २, ३६, ४; १६,६,९†; १७, २२, ३; ४१, ६[j]; –सुम् ऋ १, ४४, ३; १२७, [१[k](८, ७१, ११)]; ८, ७१,१३; १०,१२१, १; मा १५, ४७†[k]; का १६, ५, २९†[k]; तै १, ४, ४४, ३[l]; मै २,१३,८†[k]; काठ २६,११[k];

---

a) पाभे. पृ२७८२ *k* द्र. । b) पाभे. पृ२७८१ *c* द्र. ।

c) पूर्वेण मुयि इत्यनेन समस्तमिति PW. । तन्न । ऐकपद्ये स्वरद्वयस्याशास्त्रीयत्वात् ।

d) =सपा. माश ३,५,३,२२ । तै १,२,१३,२ मै १, २,९ काठ २,१० क २,४ शौ ७, २७,८ वसव्यैः इति, पै २०,६,८ मधुना इति च पाभे. ।

e) सपा. वसुना<> वसुभिः (माश १, ९, २, ३१ तैब्रा ३,७,५,१० आपश्रौ ४,१२,३ च)<> ऋ ४,३४, ११ मदथ (सं √मद् द्र.) इति पाभे. ।

f) सपा. काठ १८,१८ अथर्वभिः इति पाभे. ।

g) पाभे. पृ २७८१ *f* द्र. ।

h) BW. यनि. । खि ५,१५,११ बभ्रुभिः इति, शंपा. सात. ?वस्वभिः इति च पाभे. । i) तु. टि. पृ ६५० *o* ।

j) पाभे. पृ२५७६ *e* द्र. । k) सपा. तै ४,४,४,८ प्रभृ. वसोः इति पाभे. । l) सपा. मा ८, १९ मै १,३, ३८ काठ ४,१२ माश ४, ४,४,११ असुम् इति पाभे. ।

३२, ४¶; ३९, १५†; शौ ७,
१०२, ४[a]; २०, ६७, ३†;
पै २०, १२, २[a]; –सुषु पै २,
१८, ५; –सू ऋ १, १५८, १;
६, ४८, १५[२]; ७, ३२, २५;
–ॱसू ऋ १, १५८, २[b]; –ॱसू
ऋ १, १२०, ७; –सून् ऋ १,
४५,१; ३, २०,५; १०, ६६,४;
मा १५, ६; का १६, २, ३;
तै ३, ५, १, २; २, ३; ४, ४,
१, २; ५, ३, ६, १¶; ¶७,
१, ५,१; ३; मै २, ८, ८; काठ
१७, ७; ३७, १७; क २६, ६;
कौ १, ९६†; जै १, १०, ५†;
–सूनाम् ऋ १, ७, ९; ५८, ७;
७६, ४;९४,१३; ९६, ⌊६;१०,
१३९, ३⌋; १२३, ४; १२७,७;
१२८, ५; १६४, २७; १७०,
⌊५; ८, ७१, ८⌋; २, ११, १;
३, ३०, १९; ३६, ९; ४, १७,
६; ५, ४, १; ३६, १; ६, ४७,
६; ५२, ५; ७, ७, ⌊७; ८,७⌋;
१६, २; २४, ५; २५, २; ३२,
५; ४३, ४; ७५, ५; ८, ३१,
१४; ३९, ४;४६, १६; ५१,५;
६८, ६; १०१, १५; ९,५८,२;
९३, ४; १०८, १३; १०, ४७,
१; ४८, ११; ५०, ७; ७४,१;
९१, ३; १२५, ३; खि ३, ३,
५; मा १२, ६६†; १४, २५;
१५, ३४†; २४, ६; ३८; का
१३, ५, ५†; १५, ८, ३; १६,
५, १६†; २६, २, १; ८, ३;
तै १,१,३, १[c]; ११,२; ४,४६,
२†; ७, १३, ३†; ८,२२, ३†;
२,३,१४, ४[d]; ३,५, १,१; ४,
२,५,४†; ३,९, १; ४, ४, ५†;
११, २; ७, १५, ६; ५, २, ४,
४; ३, ४,३; ५,१६,१; ६, १५,
१; ७, १७, १; मै १, १, ३[e];
८; १२; ३, १; ३६; ९, २; २,
७, १२†; ८, ५; १३, ७†; ३,
२, ४; १३, ७; १६, ५; ४,१,
३[२]; ८; १३; १४, ५†; काठ
१, ३[c]; ११; ३, ९; ६, १०†;
७, १६†; ९, १०; ११, १२†;
१६, १२†; १७, ४; २१, १;
२२, ५;१५; ३१, २[२];¶; १०;
४७, ६; ४९,५; ५३, ७; क १,
१[c]; ११; २, १६; २५, ३†;
२६, ३; ४६,८[२]; ¶; ४७,१०;
†कौ१, ३१७; ५८२; २, १००;
४०८; ४४६; †जै १, ३३, ५;
५९, ५; ३, १०, २; ३१,२८;
३४, ४; शौ ४,२६,१; २; ३०,
२†; ७,७७,८†; ८१,२;८४,३;
९,१,४; १५,५; १०,८, ४२†;
२०, ७०,१५†; पै १,१०३,१;
२,३६,१;२; ४.३६,१;२; १२,
१,१३†; †१६,३२, ४; ६८,५;
२०,११,२; ३१, ७; –सूनि ऋ
१,१५,८; ४२,१०; ५९,३;६७,
४; ८४, २०; १२३, ६; १३४,
४; २, ३०, १०; ३२, ५; ३,
५१, ५; ५५, २०; ५६, ६; ४,
२४, १; ३३, ११; ५, ४२,३;
६१, १६; ६, १,१३; ५,२; ३;
७, ३; १६, ४८; ३०, १; ३१,
४; ४५, ⌊(१, १७६, ३)८[e]⌋;
२०; ७३, ३; ७, ६, ७; ११,
३; २४, १; २७, ३; ३४, २२;
४५, ३[f]; ७७, ⌊४ (९,७८,५)⌋;
७९, ३; ८४,४; १०३,१०; ८,
१२, २१; ७८, ८; ९९, ३; ९,
७, ९; १४, ८; १५ ६; १८,४;
२९, ४; ६२, ११; ६३, ३०;
६४, १८; ६५, २; ६९, १०;
८८, २; ९७, ५१-५३; १००,
२;३; १०८, ११; १०, ६, ६;
२१, ६; ४४, ५; ४६, १; ५४,
५ ;६९, ६; ८३, ३;१११,१०;
१८०, १;१९१, ⌊(८,९३,२९)
१⌋; खिसा ३, ६[g]; मा ६, ८;
८, १८; १५, ३०†; ३३,४१†;
का ६, २, २; ९, ३,४; १६,
५, ११†; ३२,३, १२†; तै १,
३, ७, १; १४, २†; ४, ४४,
२; २, ६, ११, ४†; ३,२,८,३;
३,९, २; ११,३[g]; ५†; ४,११,
४†; ५, १, १[h]; ४,२,२, ४‡[i];
४,४,४†; ६, ३,६,१; मैं १,२,
१५;३,३८;२,३,८;५,१०;१३,
७†; ३,९,६; †४,१२,३;४$[d];
६[२];$[g]; १३,६;१४,६;१४; काठ
२,१५†; ३,४; ४, १२; १६[२]†;
७, १६†; १०, १३; १३,१६†;
१८, २०†; २६, ७; ३८, ७†;
४०, ११†; क २, ११; ३,१०;
४१,५; †कौ १, ७७; १९०$;
२६७; ३१४; ५४१; ५८१; २,
२५५; ४५४; ४५५; ४८६;
६२२; ६६९; ७७८; ८२२;

a) पाभे. पृ २७८३ *l* द्र.।
b) तु. वें. सा. Gri.; वैतु. GW. प्र२ इति।
c) सपा. मा १,३ का १,२,२ प्रमृ. वसोः इति पाभे.।
d) सपा. वसूनाम् <> वसूनि इति पाभे.।
e) पृ २७८१ *i* इहापि समानं वर्तयितव्यम्।
f) पाभे. पृ २३६९ *i* द्र.। g) =सपा. आपमं २, ११,४। शौ ७, १८, ३ वार्या इति पाभे.।
h) पाभे. पृ २७८२ *f* द्र.। i) पाभे. पृ २७८२ *b* द्र.।

१०७४; ३, १, २; †जै १, ८, ५; २०, ६$; २८, ५; ३३, २; ५५, ११; ५९, ४; २, १, १; ३, २१, २०; ३४, १२; १३; ३७, १; ५०, ९; ५१, ९‡[a]; ५२, ३‡[b]; ५५, १०; ४, ४, ३; शौ २, ३५, १; ३, ४, २; ४; ४, ३२, ३†; ५, ७, ६; ६, ६३, ४†; ७, ५०, २†; १०२, ३; ४[c]; १२, १, ४४; १९, ५, १†; २४, ६; †२०, ५८, १; ९०, ३; ९४, ५; पै १, ८८, ३; ३, १, २; ४, ३२, ३; ७, ९, ८; १०, ६, १०; १५, ६, ३; १७, ३, १२; †१९, १, ३[d]; ७, १; २०, १०, ९†; १८, ४†; ३४, ३; –सो?[e] मं ३, ७, ७¶; –†॰सो ऋ २, ७, १; ३, १५, ३; ५७, ६; ६, २, १; १६, २४; ४८, ९; ८, १९, १२; ३३, २; ९, ९८, ५[f]; १०, ७, २; तै १, ३, १४, ४; मै ४, ११, ४; कौ १, ४१; ८४; २, २१५; ९७३; जै १, ४, ७; ९, ४; ३, १९, १०; शौ २०, ५२, २; ५७, १५; –॰सो ऋ १, १०, ४; ३०, ⌊१०; ३, ५१, ६; ८, ७१, ९⌋; ३१, ३; ४५, ९; ८४, २०; १२९, ११[2]; २, १३, ⌊१३; १४, १२⌋; ३७, ६; ३, १८, २; २१, ५; ४१, ⌊७; ७, ३१, ४(१०, १३३, ६)⌋; ४, ३२, १४; ५, ३, १०; ६, १, १२; १६, १८; ४६, ६; ७, ३१, ३; ८, १, ६; २९; २, १; ४, १७; १९, २६; २८; २९; २१, ८; २३, २८; २४, ७; २६, २०; ४४, ३०; ४६, ९; ५०, ३; ४; ⌊(२४, ८)९⌋; ५१, ⌊६; ५२, ६⌋; ५२, ८; ६०, ४; ९; ६६, ⌊(४, २९, १) १२⌋; ७०, ९; ७८, ३; ९८, ११; १०३, ४; १३; १०, ८, ४; ३८, २; ९३, ११; १०५, १; खि ३, २, ३; ४; ९; ३, ६; ४, ६; ८; ५, ३, १; ४, ८; मा २३, १९; २७, ४३†; का २५, ५, २; तै ३, २, ५, १; ७, ४, १२, १; मै १, १०, ३‡[g]; ३, १२, २०; †४, १३, ५; ६; १४, २; †काठ १६, २१; १८, २०; २०, १४; ३५, १४; ४४, १[2]$; क ४८, १३†; †कौ १, ३६; ५८; १२४; १३२; २२८; २, ६८; ८४; ५२०; ५८९‡[f]; ८९४; १०७४; ४, ८$; †जै १, ४, २; ६, ४; १३, १०; १४, ८; २४, ८; ३०, १०; २, ७, ३$; ३, ७, ६; ८, १०; ४०, १६; ४८, ६‡[f]; ४, १४, १; २८, ९; शौ ७, ५७, २; †२०, १८, ४; २३, ७; ८०, २; १०८, २; पै २०, ४१, १०[h]; ४८, ४†; –सोः ऋ १, ९, ९; २२, ७; ३, ५१, ३; ४, ५, १५; ६, ५५, ३; ८, २४, ⌊८ (५०, ९)⌋; ८१, ६; ८८, १; १०, ६१, १२; मा १, २; ३[21]; ४, १६; २६, ११†; ३०, ४†; का १, १, ३; २, २[21]; ३; ४, ५, ९; ३४, १, ४†; तै १, १, ५, १; १०, ३; २, १, २; ३, २; ४, २, २, ३‡[j]; ४, ४, ८‡[k]; ५, ४, ८, १[4]; ¶७, ३, २[2]; ३[2]; मै १, १, ६; ९; २, १; ३; ४, १; २, ६, ८; ३, ¶४, १[2]; २; ६, ९; ४, १२, ३†; काठ १, ३[1]; २, ४; ५, ४; २१, ११[5]; ¶[4]; २३, ६; २५, ६¶; ३१, २; ३२, ४; क १, १[1]; १६; ३९, ३¶; ४६, ८; †कौ १, २३६; ४६५‡[k]; २, ३५; ५८९‡[l]; ११६३‡[k]; †जै १, २५, ४; ४८, १०‡[k]; ३, ४, ६; ४८, ६‡[l] शौ ९, ४, ३; १२, ३, ४१; १९, ५५, २; †२०, ९, १; ४९, ४; ७१, १५; पै २, ३६, ५; ८, ११, ८; १४, १, १३; १६, २४, ३; १७, २९, १०[2]; ४०, १; २०, ९, २; –सोःऽ-सोः शौ १९, ५५, ३; ४; पै १९, ४४, २२; २३; –॰सोः[m] शौ १, १, २; पै १, ६, २; –†सौ ऋ १, ८१, ३[2]; ४, १७, १३; ८, १३, २२; कौ १, ४१४[2]; २, ३५४[2]; जै १, ४०, ६[2]; ३, २९, ११[2]; शौ २०, ५६, ३[2]; –†स्वः ऋ १, २७, ५; ५१, १; ७१, ९; ९०, २?[n];

---

[a]) पाभे. पृ१७१५ *n* द्र. ।

[b]) पाभे. पृ १७१५ *o* द्र. ।

[c]) सपा. मा ८,१८ तै १,४,४४,३ मै १,३,३८ काठ ४,१२ ह्वींषि इति पाभे. । [d]) पाभे. पृ २३६९ *i* द्र. ।

[e]) वसु इति शोधः । [f]) सपा. –॰सो<>-॰सो इति पाभे. । [g]) सपा. ऋ १,८२,३ विभे. ।

[h]) सपा. शौ १९,५५,२ वसोः इति पाभे. (वैतु. BKA. वासः इति ?) ।

[i]) पाभे. पृ २७८४ *c* द्र. ।

[j]) पाभे. पृ२७८२ *k* द्र. । [k]) पाभे. पृ २७८३ *k* द्र. ।

[l]) सपा. ऋ ९,८९,५ वस्वः इति पाभे. ।

[m]) सपा. वसोष्पते<>वसुपते इति पाभे. ।

[n]) वस्वो =*वसुना > वस्वा ⌊तृ १⌋+उ (तु. ⌊तात्पर्यतः⌋ स्क.; वैतु. पपा. प्रभृ. =वस्वः इत्येकमेव पदमिति ?) । 'ते हि (विश्वे-देवाः) वस्वा वसवानाः

११३, ७; १४३, ४; २, १, ७; २, १२; १४, ११; २०, ४; ३, ४, १; १९, ३[a]; ४३, ५; ४, १७,११; २०, ८; २१,१०; ४१, ९; ५२, ३; ५, १५, १; ३४,४; ६, १९, १०; ३६,४; ७, ६, ४; १५, ४; २०, ९; ३९,१; ८२, ४; ८३,५; ६; ९७,[१०; ९८,१०]; ९८, ६; ८, १४, १; ३९, १०; ४०, ९; ७१, ९; ८१, ४; ९, ९७, ४४; ९८, ५[b]; १०, १५, ७; ३०, १२; ४३, ३; ७७, ६; मा १९, ६३; का २१, ४, १३; तै १, ३, १४, ६; मै ४,१४,५; १५; काठ ३९, १; ४०, १४; कौ १, १२२; ३७६; २, ८४९; १०७७; ११८४; जै १, १३,८; ३९, ७; ४, १२, १; शौ १८, ३, ४३; २०, १७,३; १२; २७, १; ८७, ६; ७.

वस्वी[c]- -स्वी ऋ ६,१६, २५; ६४,१; ७, २०, [१०; २१, १०]; मा ४,२१; का ४,७,१; तै १,१,९,३; २,५,१; ६,१,८,१; मै १,२,४; ३,७,६; ४,२,५; काठ २,५; २४,४; क १,१८; ३७,५; कौ २, १००४[d]; जै ४,१७,१०; -†स्वीः ऋ १, ८४,[१०-१२]; ५, ४१, ६; ७४,१०; १०,२२, १२; मै ४, १२, ४[2]; १४,१४; काठ ८, १७; कौ १, ४०९; २, ३५५-३५७; जै १, ४०, १; ३, २९, १२-१४; शौ २०, १०९, १-३; -स्वीभिः ऋ ३, १३, ५; -स्व्या ऋ १०, १७२, २; -स्व्यै मै ४,२, ४.

वासव[e]- -वस्य शौ ६, ८२, १; पै १९,१७,४; -वाः तै १,६, १२,२; मै४,१२,२; काठ८,१६.

२वसव्य[f]- -व्यम् ऋ २,९,५; १३,[१३; १४, १२]; १०,७४, ३; -†व्यस्य ऋ ४, ५५, ८; ६, ६०, १; तै ४, २, ११, १; मै ४, १०, ५; काठ ४,१५; ७, १६; -व्या ऋ ७, ३७, ३; -०व्याः तै २, ४,८,१; १०,१; मै २, ४, ७; ८; काठ ११, ९; १०; पै ३,३१, ४; -व्ये ऋ ७, ५६, २१; -व्यैः ऋ ६, १, ३; १३,४; ६०,[१४(८,७३, १४)]; तै १, २, १३,२[g]; मै १, २,९[g]; ४,१३,६†; काठ २,१०[g]; १८, २०†; क २,४[g]; शौ ७,२७,८[g].

वसु-जित्- -जित् शौ ५,२०, १०[h]; -जितम् पै १८,३०,१-३; २०,४८,५[i]; -जिति शौ १३, १,३७; पै १८,१८,७.

†वसु-ता- -ता ऋ ६,१,१३; मै ४,१३,६; काठ १८,२०.

वसु-ताति[j]- -तिः ऋ १,१२२, १२; -तिम् ऋ १,१२२,५.

†वसु-त्ति[k]- -त्तये ऋ ८,६१,७; ९,४४, ६; कौ १, २४०; २, ९३१; जै १,२५,८.

वसु-त्व- -त्वा ऋ १०,६१,१२.

†वसु-त्वन[l]- -नम् ऋ ७,८१, [६; ८,१३, १२]; -ना ऋ ८, ५०,[(४९, ६) ६]; खि ३,२,६; -नाय ऋ ८,१,६; कौ १,२९२; जै १,३०,१०.

वसु-दा- -दाः शौ १२, १,४४; पै १७, ३, १२; १९, १७,७[m]; -†दाम् ऋ ८, ९९, ४; कौ २, ६७०; जै ३, ५५,११; शौ २०, ५८, २.

वसु-दान[n]- -नः शौ ६,८२,३[o]; १९,५५,३?[p]; ४?[p]; पै १९,१७, ६; ४४,२२?[p]; २३?[p].

---

महोभिः (च) अप्र-मूराः (*दीप्तिमन्तः [सन्तः]) व्रता रक्षन्ते' इति वा। पृ २७८० वसवानाः इत्यत्र $e^1$ इति टि. संकेत इष्टः, तदनु टि. भागे च।

[a]) ष१ द्र. (तु. सा. [ऋ.], GW. K.; वैतु. वें., भा. सा. [तै.] प्र३ इति)। [b]) पाभे. पृ २७८५ *l* द्र.।

[c]) विप. (उषस्-, पत्नी-, धी- प्रभृ.), नाप. (गो-)। स्त्री. ङीप् प्र. (पावा ४,१,४४ [वैतु. सा. प्रभृ. चिन्त्याः])।

[d]) विप. (वसुमत्- [*इन्द्र-])। *वसु-भरि-> (प्र१) -रिर्> नैप्र. वस्विर्> (रकारे परतः) यनि. (तु. पृ २६३९ *r* टि.)।

[e]) विप. (इन्द्र-), नाप. (तै. मै. काठ.) च। तस्येदमीयेऽर्थे, स्वार्थे वा समूहे [तु. भा.] वा अण् प्र.।

[f]) = वासव-। विप., नाप. न.। यत् प्र. इति ततो विशेषः। [g]) पाभे. पृ २७८३ *d* द्र.।

[h]) सपा. पै ९,२४,१० वसुक्षितिः इति पाभे.।

[i]) सपा. कौसू १०८,२ वसुविदम् इति पाभे.।

[j]) तु. टि. देव-ताति-।

[k]) तु. टि. भगत्ति-।

[l]) तु. टि. जनि-त्वन-।

[m]) सपा. शौ ६,१०८,१ असि इति पाभे.।

[n]) विप. (धनादिदानकृत्- [इन्द्र- प्रभृ.])।

[o]) *वसु-दापन->-नः इति शोधः? (तु. छन्दोऽवसानम्)। [p]) निर्देशः? °दा(ः),नः इति द्वि-पदः शोधः (तु. W.; वैतु. पपा.)।

वसु-दावन्- -†०वन्[a] ऋ २,६,४; मा १२, ४३; का १३, ३, १४; -वा ऋ २, २७, १२; तै १, २,३, २[b]; ४,२,३,४‡[a]; मै १, २, ३[b]; २, ७, १०‡[a]; ३, ६, ९[b]; काठ २, ४[b]; १६, १०‡[a]; २३, ६[b]; क १, १६[b]; २५,१‡[a]; ३१,२‡[a].

वसु-देय[c]- -†याय ऋ १, ५४, ९[d]; २, ३५, ७[e]; ६, ३९, ५; क ४८, ४[e]; शौ ३,४, ४[d]; -ये शौ १३, ६, ५.

वसु-देव->वासुदेव[f]- -०व खि ७, ३, १.

१वसु-(ध>) धा[g]- -धासु पै १९,४७, ११.

२वसु-धा[h]->वसुधा-तम- -मः[i] मा २७, १५; का २९,२, ५; तै ४, १,८, २; मै २, १२, ६; काठ १८, १७; क २९, ५; पै ९, १, ५.

वसुधा-तर- -?रः[j] शौ ५, २७, ६[j].

वसु-धान[k]- -नः शौ ११, २, ११; पै १६, १०५, १.

वसुधानी- -नी मै ४, १४, ११; शौ १२,१, ६; पै १७, १, ६.

†वसु-धिति[l]- -तिः पै ९,२४, १०$[m]; -तिम् ऋ १, १२८, [८ (५, १, ७; ६, १४, २; )]; ४, ८, २; ७, ९०, ३[n]; मा २७, २४[o]; का २९, ३, २; मै ४, १४, २; काठ १२, १५; जै ४, १९, ६; -ती ऋ ३,३१, [१७; ४,४८,३]; खि ५, ५, ४; ७,३, ४; मा २८,१५; ३८; का ३०, २, ४; ४, ४; मै ४, १३, ८; काठ १९,१३; -०ती ऋ १, १८१,१; -त्याः पै १६, ७१,२.

वसु-धीत[p]- -तम् काठ ८,१४[q].

वसु-धीति- -तिम् क ८, २[q]; -०ते मै १,७, १[q].

वसु-धेय[c]- -यस्य खि ४, ९,६; ५, ७, ३, १-११; मा २१,४८-५८; २८, १२-२२; ३५-४५; का २३, ६,१-११; ३०,२,१-११; ४,१-११; मै ३ ११,५[to]; ४,१०, ३[r]; १३, ८[ts]; काठ १९,१३[tt]; २०,१५[r]; -याय खि १,७,२[d]; काठ ३५, ३‡[e]; ८[r]; क ४८,९[r].

वसु-नीति[s]- -तिः शौ १२, २, ६[q]; पै १७, ३०,६.

वसु-नीथ[t]- -०थ[q] मा १२,४४; का १२, ७, १९; १३, ३, १५; तै ४,२,३, ४; काठ ३८,१२.

१वसु-पति[u]- -†तिः ऋ ४,१७, ६; ६, ५२, ५; ७,४५,३[v]; ८, ४४, २४; तै १, ४, ४६, २; ४,२,३,४‡[w]; मै २,७,१०‡[w]; ४, १४,६; काठ १६, १०‡[w]; क २५ १‡[w]; ३१,२‡[w]; पै १९, १,३[v]; -†तिम् ऋ १, ९,९; ३, ३६,९;५,४,१; ८,५२,[६;६१, १०]; खि ३, ४, ६; तै १, ४, ४६,२; ७,१३,३; काठ ६, १०; ७,१६; शौ २०,७१,१५; -०ते ऋ २, ६, ४[w]; मा १२,४३†[w]; का १३, ३,१४†[w]; मै ४, १२,

a) सपा. -०वन् <> -वा इति पाभे.। b) पाभे. पृ १५५७ *l* द्र.। c) उस. उप. भावे यत् प्र.।
d) सपा. °दुेयाय <> °धेयाय इति पाभे.।
e) सपा. °दुेयाय <> °धेयाय इति पाभे.।
f) व्यप. (श्रीकृष्ण-)। g) नाप. (भूमि-)।
h) विप.। उस. विजन्तम्।
i) सपा. °तमः <> ?°तरः इति पाभे.।
j) °तराः (प्र३) इति शोधः [वैतु. पपा., शौच (४, ४५ [तु. भाष्यम्]), Gri. Garbe [KZ २३, ४८६] वसुश्रातृ-> -तरः इति पदमिति, W., WI., [पक्षे] शौच (तु. भाष्यम्) °धा-तर-> -रः इति पदमिति च?]। k) विप.। उस. उप. अधिकरणे ल्युट् प्र.।
l) विप., भाप.। m) पाभे. पृ २७८६ *h* द्र.।
n) विप. (*भोजन-प्रद- [वायु-])। व्यु.?। बस. पूप. कर्मणि <√*वस (=√प्सा 'भक्षणे') इत्येवं स्यात्। एवं च तर्हि '(वायोः) स्वाः नियुतः (अश्वाः) निरेके (निरेचने [परिक्षये]) वसुधितिं (सन्तं तमेव) सश्चत' इति वा. (तु. सस्थ. टि. निरेक-, श्वेत- च; वैतु. अन्ये पूप. धन-पर्याय इति)।
o) °ती इति निसा. पाठः? यनि. शोधः (तु. पपा. उ. म. सपा. ऋ ७,९०,३ च)।
p) भाप.। उस. उप. √धा + क्तः प्र. ईत्वञ्च उसं. (पा ७,४,४५)।
q) सपा. °धीतम् <> °धीतिम् <> °धीते <> °नीतिः <> °नीथ (माश ६,६,४,१२ हिश्रौ ३, ६, १५ च) इति पाभे.।
r) नाप.। s) विप. (ब्रह्मन्-)। बस.।
t) विप. (अग्नि-)। बस. उप. भाप.।
u) नाप.। षस.। v) पाभे. पृ २३६९ *i* द्र.।
w) सपा. °पतिः <> °पते इति पाभे.।

१[a]; –†०पते ऋ १, १७०, ⌊५ (८, ७१, ८)⌋; २, १, ११; ३, ३०,१९; १०,४७,१; ११२, १०; मै ४, १४, ५; कौ १, ३१७; जै १, ३३, ५.

२वसु-पुंति[b]–> †वसुपत्नी– -त्नी ऋ १,१६४, २७; शौ ७,७७,८; ९,१५, ५; पै १६,६८, ५; २०, ११, २.

वसु-भृत्– -भृत् पै १६,४८,३; –भृतः पै १३, १४,७.

वसु-मत्– -†मत् ऋ ९, ६९, ⌊८; ८६, ३८⌋; खि ३, २२, ५; कौ २, ३०६; जै ३, २५, २; –मतः खि ५, ७, ४, १७[c]; तै ७, ५, ७, २¶; मै १, ४,१; ४, १, १४; काठ ५,४; ३२, ४; ३३,७¶; –†मता ऋ १, ११८, १०; १२५, ३; ४, ४, १०; ७, ६७, ३; खि ३, १४, १; तै १, २, १४, ४; मै ४, ११, ५; काठ ६,११; –मते मा ६,३२[c]; ३८, ८[c]; का ६,८, ३[c]; ३८,२, २[c]; ¶तै २,२,४, ५; ११, ६[२]; ७, ५, ७, २[२]; मै १,३, ३[c]; २, २, ६¶; ४, ५, ४; ९, ८[c]; ¶काठ ३, १०[c]$; १०,६; ११, ३; ३३,७[२]; क २,१७[c]; –मन्तः काठ ५, ४[d]; –मन्तम् ऋ १, १५९, ⌊५; ४, ३४, (४९, ४) १०; ६, ६८,६; ७,८४, ४⌋; २, २४, २; ७, ७१, ३; १०, ११, ८; तै २,२,४,५[२]¶; मै ४, १४, १५†; काठ ३२, ४¶; शौ १८, १,२६†; पै ७, १७,१[e]; –मान् ऋ ७, ७१, ४; तै १, ६, ६,२; ७, ६,४; २, २, ४,५[२]¶; मै १, ४, १; ४,१,१४¶; काठ ५,४; १०, ६¶; ३२,४; शौ १६, ९, ४[२d]; पै १८,२९, ५[२d].

वसुमती– -ती ऋ ३, ३०, ११; मा २८, १८[f]; का ३०,२,७[f]; तै ४,३, ४, १[g]; पै १६,४८,३; –तीम् मा २,८; का २,२,३; –त्या खि ५,७, ३,७[f]; मै ४,१३,८; काठ १९,१३.

वसुमद्-गण[h]– -णस्य तै ३, २, ५,२.

†वसु-रुच्[i]– -रुचः ऋ ९,११०, ६; कौ २, ८४५; जै ३,५८,३.

वसु-रुचि[j]– -चिः शौ ८,१४,७; पै १६, १३५,७.

वसु-रोचिस्– -चिषः[k] ऋ ८, ३४,१६.

वसु-वत्– -वन्तम् शौ १९,१८, १[e].

वसु-वन्[l]– -वने खि ४,९,६?[m]; ५, ७, ३, १-११; मा २१, ४८-५८;२८,१२-२२; ३५-४५; का २३,६,१-११;३०,२,१-११, ४,१-११: मै ३. ११, ५[११]; ४, १०, ३[६]; १३, ८[१५]; काठ १९, १३[११]; २०, १५[८].

वसु-वनि[n]– -निः काठ ३८, १३[o]; शौ ७, ६२, १[o]; १३,६, ५; -निम्[p] ऋ ७,१,२३; शौ २०,१३५,११[q].

†वसु-वाहन[r]– -नम् ऋ ५,७५, १; कौ १, ४१८; २, १०९३; जै १,४०,१०.

वसु-विद्[s]– -वित् ऋ १, १८, ⌊२; ९१, १२⌋; १६४, ४९; ९, ८६, ३९; ९६,१०; खि १,१०, ४; †मा ३, २९; ३८, ५; †का ३, ३, २१; ३८, १, ५; तै १,

---

a) पाभे. पृ २७८५ *m* द्र.। b) नाप.। उस.।

c) सपा. °मतः <> °मते (काश्रौ ९, ४,७ च) इति पाभे.।

d) सपा. °मन्तः <> °मान् इति पाभे.।

e) सपा. °म° <> °व° (अअ १९,१७;१८ च) इति पाभे.। f) सपा. °मती <> °मत्या इति पाभे.।

g) पाभे. पृ१२७८ *q* द्र.। h) विप. (सोम-)। बस.।

i) नाप. [दीप्त्या दीप्यमान- (देव-सामान्य- ⌊वैतु. वें. सा. व्यप. सत् देव- इति, PW. प्रभृ. विप. इतीव च?⌋)]। j) व्यप. (गन्धर्व-)। बस.।

k) पाठशोधेनेन्द्रस्य विप. सत् पं१ (तु. पृ २००२ *g*; वैतु. वें. सा. प्रभृ. वयमित्यनेनान्वय इति कृत्वा प्र३ इति?, PW. प्रभृ. व्यप. इति)।

l) उस. उप. √वन् + भावे विच् प्र.।

m) वसुवने इति स्वरः? यनि. शोधः। n) विप.। उस. उप. <√वन् (=√वन्द्) 'स्तुतौ' इति।

o) =सपा. वैश्रौ १८,१४ : १२ प्रभृ.। शेषः पाभे. पृ २६१२ *b* द्र. यत्र ?वः सुवनिः >यनि. शोधः। सस्थ. सपा. च उप. मेधस्–, मति–, मनस्– इत्येते स्तुति-पर्यायाः द्र.।

p) 'सः (मर्तः) देवता (=*°तया ⌊तृ १⌋ = देव-भाव-मुपगतः सन्) वसुवनिं (वसुमत्तां) दधाति' इति वा. इति कृत्वा यनि. भाप. स्यात्?। q) पाभे. पृ २७८२ *d* द्र.।

r) विप. (रथ-)। उस. उप. कर्तरि ल्युट् प्र. उसं. (पा ३,२,६६)। s) विप. (दीप्त्यादिमत्- ⌊अग्नि-प्रभृ.⌋)। उस. उप. <√विद् 'लाभे'।

६, २, १[३]; २, ३,९, १[३]; ४,३, १३, ५†; मै १, ५, ४†; २,३, २[५]; †४, १०,४; १४, ३; काठ २, १४†; ७, २†; १२, २[४]; क ५, २†; कौ २, ३०५†; ३, ४,१; जै २, २,९; ३, २५,१†; शौ १८, ४, ४८; पै १, ३४,२; २, ८०, ४[२]; –†विदः ऋ ८, ६०,१२; ९, १०१,११; कौ २, ४५३; जै ३, ३४,११; –विदम् ऋ ७, ४१,६; ८,२३,१६; ६१, ५; ९, १०४, ४; १०, ४२, ३; खि ५, ९, ३; मा ३४, ३९†; मै २, ७, १[a]; †कौ १, २५३; ५७५; २, ९२९; †जै १, २७, १; ५८, १०; †शौ ३, १६, ६; २०, ८९, ३; ११८, १; १२७, ६$; पै ४, ३१, ६†; –†विदा ऋ १, ४६, २; कौ २,१०७९; –विदे पै १,३५,२.

वसुवित्-तम– -मः मा ३, ३९; का ३,४,३; पै २०,५६,७; –मम् ऋ १, ४५, ७; ६, १६, ४१; मा ३, ३८; का ३, ४,२; तै ३, ५, ११, ४†; मै ४,१०, ३†; काठ १५, १२†.

†वसु-श्रवस्[b]– -वाः ऋ ५, २४, २; मा ३, २५; १५, ४८; २५, ४७; का ३, ३, १७; १६, ५, ३०; २७, १५, २; तै १,५, ६, ३; ४, ४, ४, ८; मै १, ५, ३; काठ ७, १; क ५, १; कौ २, ४५८; जै ३, ३४, १६.

व(सु>)सू-जू[c]– -जुवम् ऋ ८,९९, ८.

√वसूय, वसूयात् ऋ ८, ८, १६.

वसूयत्– -यन् मै ४, १४, ९; –यन्तः ऋ १, १३०,६; ४, १६,१५.

†वसूया– -या[d] ऋ १, ९७, २; १६५, १; मै ४, ११, ३; काठ ९, १८; शौ ४, ३३, २; पै ४, २९, २.

†वसूयु– -यवः ऋ १, ४९, ४; ६२, ११; १२८, ८[२]; २. ११, १; ३, २६, १; ५, ३, ६; २५, ९; ७, ३२, २; ८, ५२, [६; ६१, १०]; ९, ११२, ३; १०, २५, २; ४७, १; ९१, १२; खि ३, ४, ६; मै ४, १४, ५; कौ १, ३१७; २, १०२६; जै १, ३३, ५; ४, २६, ५; २८, ४; पै १३, १४, ७$; –युः ऋ १, ५१, १४; १८६, ११; २, ३२, १; ५, २९, १५; ६, ५१,१२; ७, १,६; ३४,२१; ६७,४; तै ४, ३, १३,६; –युम् ऋ ४, ४४, १; ७, ६७, ५; शौ २०,१४३,१.

वस्तवे[e] ऋ १,४८,२.

†वस्तु[f]– -स्तुः[g] ऋ ८, ७१, १५; जै ४, १४, ९; –स्तुषु[h] ऋ ८, ९९,३१; कौ २,११७३.

१†वस्तोर्,स्[i*]– ऋ १, ७९, ६, १०४, १; ११६, २१; १७७, [५; ६, २५, ९; १०,८९,१७]; १७९, १; २, ३९, ३; ४, १६, ४; ४५, ५; ५, ३२, ११; ६, ४-५, २; ३९, ३[j]; ७, १, ६; १०, २; ८, २५, २१; १०, ४०,२; ४; ११०, ४; १८९,३; खि ५, ७, ३, १$; मा ३, ८; १५, ३७; २८,१२$; २९,२९; का ३, १, ८; १६,५,१९; ३०, २, १$; ३१, ४, ५; तै १, ३, १४, ३; ४, ३, १३, ६; ४, ४, ५; मै १, ८, ७[२]$; २, १३,८; ४,१३,३; ८$; १४, १५; काठ ६,८[२]$; ७,१३; १६; १६,२०; १९,१३$;३९,१५; क ४,७[२]$; ६, ४; कौ २, ७२८; ९१३; ३, ५, ६; जै २,६,५; ३,५९, २०; ४,१५,६; शौ ५,१२,४; ६,३१, ३; २०,४८,६; ७७,४; पै १९, ४५,१३; वस्तोःऽवस्तोः ऋ १०, ४०,१;३.

a) सपा. मा ११,८ प्रभृ. सखिविदम् इति पाभे.।

b) विप. (अग्नि-)। बस.।

c) विप.। उस. उप. <√जू।

d) =वसूयया (तृ१)।

e) तुमर्थीयः तवेन् प्र. (तु. वें. स्क. GRV. MVS. प्रभृ.; वैतु. सा. धा. निवासे वृत्तिरिति ?)।

f) कर्तरि तुन् प्र. (पाउ १,७०)।

g) विप. (दीप्तिकर- [अग्नि-])। धा. दीप्तौ वृत्तिः (तु. वें. सा. PW. प्रभृ.)।

h) नाप. (तमस्-)। <√वस् 'आच्छादने' (तु. [पक्षे] सा.; वैतु. वें. सा. PW. प्रभृ. दिनपदार्थदीप्त्याद्यर्थे धा. वृत्तिरितीव ?)।

i) नाप. न. (दिन- [तु. निघ १,९])। <√वस् 'दीप्तौ' (तु. दे.; वैतु.वें. सा. <√वस् 'निवासे' वा 'आच्छादने' वेति, PW. प्रभृ. च यनि. =वस्तु- > [ष१] अव्य. इति ?)। यनि. रूपं कालात्यन्तसंयोग-वाचकं द्वि१ द्र.।

j) वैतु. ORN. ऋ ६, ३,६ इत्येतत्तुलनया वस्ते [प्रपु१] इति शोधः इति ?।

२वस्तोस्(:)[a] ऋ १,१७४,३.
२वास्[b]- -से ऋ ५,४३,१४?.
**१वस्-** √वस् (निवासे) द्र.
**२वस्-** √वस् (बधा.) द्र.
**वसत्-**, वसति- √वस् (निवासे) द्र.
**?वसति** पै १६,१४८,६.
**वसती-**, वसतीवरी- √वस् (निवासे) द्र.
**?वसते**[c] पै ५,२७,५.
**वसन-** √वस् (आच्छादने) द्र.
**?वसनोः** पै ६,२२,२४.
**१वसन्त-**, २वसन्त- √वस् (बधा.) द्र.
**वसर्-**, °र्हा- √वस् (निवासे) द्र.
**वसवान-** √वस् (बधा.) द्र.
**१वसव्य-** √वस् (निवासे) द्र.
**२वसव्य-** √वस् (बधा.) द्र.
**वसा**[d]- -सया मा २५,९; का २७,९,१; तै ५,७,२०,१; मै ३,१५,८; काठ ५३,१०; -¶सा तै ६,३,११,१; मै २,५,७; -साः मै २,५,७¶; -साम् मा ६,१९; का ६,४,३; तै १,३,१०,२; मै १,२,१७; काठ ३,७; क २,१४.
**वसा-पावन्**[e]- -॰वानः मा ६,१९; का ६,४,३; तै १,३,१०,२; मै १,२,१७; काठ ३,७; क २,१४.
**¶वसा-होम**[f]- -मम् तै ६,३,११,१[2]; ३; मै ३,१०,४.
**वसान-**, √वसाय √वस् (आच्छादने) द्र.
**?वसावम्** पै १८,२५,३.
**वसावी**[g]- -व्याम् ऋ १०,७३,४.
**१वसिष्ठ-** √वस् (बधा.) द्र.
**२वसिष्ठ**[h]- -०ष्ठ शौ १८,३,१६; -०ष्ठ ऋ ७,२३,१; ३३,१०; ११; ८८,१; ९६,१; कौ १,३३०†; जै १,३,४,८†; शौ २०,१२,१†; -ष्ठः ऋ ७,९,६; १८,४; २१; २२,३; २६,५; ३३,६; १२; १४; ४२,६; ५९,३; ७३,३; ९५,६; १०,६५,[१५; ६६,१५]; १५०,५; १८१,१; मा १३,५४; का १४,७,२; ¶तै ३,५,२,१; ४,३,२,१$; ५,२,१०,५; ७,४,७,१; ¶मै १,४,१२; २,७,१९$; ४,२,९; १२,४†; १४,७†; काठ १२,१५†; १६,१९; २०,९¶; ३२,२¶; ३७,१७¶; क २५,९; ३१,११¶; †कौ १,२४१[1]; २,२७९[1]; ३,२,५; †जै १,२५,९; २,५,७; ३,२३,१०; शौ २०,११७,३†; पै २,२८,४; ५,२८,४; ११,५,१३; १४,३,२३; -ष्ठम् ऋ १,११२,९; ७,३३,१३; ७०,६; ८६,५; ८८,४; शौ ४,२९,३; पै ४,३८,३; -ष्ठस्य ऋ ७,३३,५; खि ३,१७[2], ५[!];

a) तुमर्थीयम् अव्य. । <√वस् '*कर्मणि'(वैतु. सा. 'निवासे' इति, Geld [KZ २७,२१७] 'भक्षणे' इति, Wolff [KZ ४०,१८] 'भेदने' इति ?)। सस्थ. ?वृतः >(वृध्- [प्रजा-]>) वृधः इति, ?येभिः > याहि आभिः इति च शोधौ । '(यज्ञपूर्तौ) हे इन्द्र, शूरपत्नीः (त्वत्-पतिकाः [सतीः दैवीः]) वृधः (प्रजाः) अज (नय), नूनं (सम्प्रति) *आभिः (वृद्धिः [सहितः]) यां च *याहि। सिंह इव (निर्भयः सन्) दमे (यजमानगृहे) अपांसि (अपसां = कर्मणां) वस्तोः (सम्पादनाय [स्थापितं सन्तम्]) अग्निं (च सर्वदा) रक्ष उ (एव)' इति वा. ।

b) भाप. (प्रकाश-)। 'इव (यथा) आयवः (मनुष्याः) शिशुं वासे (प्रकाशाय, उज्ज्वलीकरणाय [हेतौ सप्त.]) मृजन्ति (शोधयन्ति [एवम् ऋत्विजः]) शिशुम् (अरणीभ्यां प्रजातमात्रं बालाग्निं वासे मृजन्ति (*भृजन्ति [काष्ठैरद्दीपयन्ति])' इति वा. इति कृत्वा श्लिष्टोपमा द्र. (वैतु. सा. [√वस् 'आच्छादने'>भावे] वास-> च१ इति, LR. Gri. √वस् 'आच्छादने' > तुमर्थीयम् अव्य. इति, GRV. [तत एव धा.?] वास- [रात्रि-]> सप्त१ इति [तु. रुद्रदत्तः आपश्रौ ६,२८,१५], PW. GW. √वस् 'निवासे'> वास- [निवास-]> सप्त१ इति ?)।

c) *वर्धस्- (भावे < √वृध् 'स्तुतौ') > √*वर्धस्य > वर्धस्ये (स्तौमि) इति शोधः। सपा. तै ४,२,५,४ इत्यत्र यो ?दसये इति पाभे., यश्च काठ ३८,१३ इत्यत्र ?दमये इति, तत्रोभयत्राप्ययमेव शोधः (तु. छन्दः)।

d) नाप. (वपा-)। <√वस् '*मसृणभावे' (वैतु. अभा. प्रभृ. निवासे वाऽऽच्छादने वेति, PW. प्रभृ. दीप्तौ इति च ?)। e) विप. (देव-)। उस. उप. √पा 'पाने'।

f) मलो. कस. अन्तोदात्तः।

g) नाप. (*कटिप्रदेशे बध्यमाना- धनरक्षिणी- [तु. पंजा. वासणी])। <(√वस् 'निवासे = निवेशने' >) *वसर्- (अवकाश-) > *वसर्-वती- > *वसर्वी- > यनि. (तु. [तात्पर्ये] PW. प्रभृ.; वैतु. वें. सा. = वसु-समूह- इति, GRV. ?ORN. = वसु-स्त्री- इतीव ?)।

h) व्यप. (ऋषि-)।

i) सा. भव. °शि° इति, S. °ष्टः इति ?।

j) °सि° इति स्वरः ? यनि. शोधः।

६, ३१, १; ३३, २; १०, २३, ५; मै ४, १४,५; शौ २०,११, १०; ७३, ६; -वाचि ऋ १, १७८,४; ६, ४५,२९; ७, २३, २; ३०, २; शौ २०, १२, २†;

**वि-वाचन-**, °चनी- वि√वच् द्र.

**वि-वाचस्**[a]- -चसम् शौ १२, १, ४५; पै १७, ५, ३.

**वि-वावदत्-** वि√वद् द्र.

**√विवास्**[b], विवासते ऋ ८,१९,२४; ‡विवासति[c] पै १७, २५, ६; विवासतः ऋ ८, ३१, ७; †विवाससि ऋ १, ७४,९; ६, १६, १२[d]; ९, ९८, ४; कौ २, १२; जै ३, २, ३.

**वि-वास-** वि√वस् (दीप्तौ) द्र.

**विविक्वस्-** √विच् द्र.

**वि√विच्**, विविनक्ति मै ४,१,७¶; विविञ्चन्ति ऋ १, ३९, ५; विविनक्तु मा १, १६; का १,५, ७; तै १,१,५,२; मै ४, १, ७; काठ १, ५; ३१, ४; क १, ५; ४७,४.

विविच्यध्वम् मै ४, १, ७; शौ ११,१,१२; पै १६,९०,१.

**वि-विक्ति-** -क्त्यै[e] मा ३०,१३; का ३४,२,५.

**वि-विञ्चत्-** -ञ्चन् ऋ १०, १२४, ५.

**विविचि-** √विच् द्र.

**?विविज्मि** √व्यच् द्र.

**विवित्समान-** √विद् (बधा.) द्र.

**वि√विद्** (ज्ञाने), विवेद ऋ १, १८५,१; १०, १२,५;८८, १७; शौ १८, १,३३†; विविदामहे[f] पै १९,२१,६.

**वि√विद्**(लाभे), >वेविद्,वि···विदत् ऋ १०,६१,१३[g].

**वि-वेविदत्-** -दत् ऋ ९, ६८, ३; ८६,९.

**विविदान-**, **विविद्वस्-** √विद् (बधा.) द्र.

**वि√विध्**, व्यध् (वेधने), विविध्यन्ति मा१६,६२; का१७,८,१६; तै४, ५,११,१; मै २,९,९; काठ १७, १६; क २७, ६; विविध्यतु शौ १, १९, ३[h]; पै १, २०, ३[h]; विविध्यताम् शौ ११,११, २३; विविध्यन्तु पै १, २०, २[h]; विविध्यतम् शौ १,८, २; पै ४, ४,१०;९,२५,१२?; ?विविध्यत[i] शौ १, १९, २; विविध्यत पै १, ३७,४;५.

?विव्यधीत्[j] मै ४,९,१२[k].

**वि-विद्ध,द्धा-** -द्धः शौ ६, ६६, १; पै १९, ११, १०; -द्धम् पै १, ७६,२; -द्धस्य पै १, ५८, ३[l]; -द्धा शौ ११,१२,२५.

**वि-विध्यत्-** -ध्यद्भ्यः[m] काठ १७, १३; क २७,३.

**विविध्यन्ती-** -न्तीभ्यः[m] मा १६, २४; का १७,३,३; तै ४, ५,४,१; मै २,९,४.

**वि-व्याधिन्-** -धिनः शौ १, १९, १; पै १,२०, १; -धिने तै ४, ५,२,१[n].

**वि-विवध**[o]- -धम् तै ७,३,५,२; ७, ३;९,३.

**वि√विश्** >वेशि, विविशन्तु तै २, ४,८,२[p].

विवेशय खि ३,१६,१.

**वि√वी**, वि···वेषि[q] ऋ १,१८९,७.

**?विवुधामहे**[r] पै ४,२५,४.

**वि√वृ** (आच्छादने), †वि···वृधि ऋ ९,४५,[३;६४,३]; कौ २,१३३; जै ३,१३,९.

वि···वृण्वे[s] ऋ ४,२१,८.

---

a) विप. (विभिन्नभाषा-भाषिन्- [जन-]) । बस. ।
b) धा. परिचर्यायां वृत्तिरिति या [२, २४] प्रभृ. ।
c) सपा ऋ १०,३७,३ निवासते इति पाभे. ।
d) तु. सस्थ. टि. अच्छा ।
e) सपा. तैब्रा ३,४,७,१ विविक्त्यै इति पाभे. ।
f) पाभे. पृ २९०१ *b* द्र. ।
g) वैतु. सा. <√विद् 'ज्ञाने' इति, GW. अगतीयमानः इति ।
h) सपा. विविध्यतु<>विविध्यन्तु इति पाभे. ।
i) °ध्यन्तु इति शोधः (तु. सा. [तु. सपा. पै १,२०, २]; वैतु. [मूको. अनु] शंपा. RW., प्रभृ. यनि. ?) । सस्थ. ?मनुष्येषवः > (मानुष्या-) >-ष्या(:) इषवः इति च शोधः ।
j) शोधः पृ ६८७ *c* द्र. ।
k) सपा. तैआ ४,२०,२ विव्यथः इति, माश्रौ २, ५, ४,२४ विह्वरः इति च पाभे. ।
l) विविद्धस्या इति पाठः? यनि. शोधः ।
m) सपा. °ध्यद्भ्यः<>°ध्यन्तीभ्यः इति पाभे. ।
n) सपा. मा १६,१८ मै २, ९, ३ काठ १७, १२ क २७,२ व्याधिने इति पाभे. ।
o) विप. (असंतुलित- [तद्-]) । बस. ।
p) तु. सस्थ. टि. अनु ।
q) तु. वें.; वैतु. सा. वि इति स्वाअ.; GW. ORN.
विविद्वस्->-द्वान् इति? ।
r) पाठः? (वि√वृध् '*छेदने'>) विवृधामहे इति शोधः ।
s) प्रपु१ तलोपः ।

विव्रे ऋ १, ६२, ७; वि… ववार मा २०,३६; का २२, ४, १; तै ३,५,५,१; मै ३,११, १; काठ ३८,६; †विव्रुः ऋ ४, १, ⌊१५;१६,६;१०,४५,११⌋[a]; ७, ९०,४; मा १२,२८[a]; का १३, २,११[a]; तै ४, २, २,४[a]; मै २, ७,९[a]; शौ २०,७७,६[a]; †वि… ववर्थ, >र्था ऋ १, ९१, २२; मा ३४, २२; का ३३, १, १६; मै ४, १४, १; काठ १३, १५; कौ ३, ३, ३; जै २, १, ३; वि…वर्तम् ऋ ६, ६२, ११; †व्यां (वि-आ )वः[b] ऋ १, ११३,१३[c]; ६,४४,८; ७, ९५, ६[d]; मै ४,१४,७; वि…आवः ऋ १,९२, ४; ११३, ४; १५७, १[e]; ५,४५,१; ७९,१[?]; ९,९७, ३८; †कौ २, ७०८[e]; ११०८; जै ३,५८,५[e]†; वि…आवः ऋ १०, ६७, ४; शौ २०,९१,४†; विवः खि ३,२२, १; मा १३,३; का १४,१,३; तै ४, २, ८, २; मै २, ७, १५; काठ १६, १५; ३८, १४; क २५, ६; कौ १, ३२१; जै १,३३,९; शौ ४, १, १; ५, ६, १; पै ५, २, २; ६, ११, १; १६, १५०, १; वि… ?अवः[f] ऋ ५, ३१, ३; वि… अव्रन् ऋ ४, ५१, २[g]; व्यावः[h] ऋ ४, ५२, ६; ८, ९, १६; शौ २०,१४२,१†; वि…आवः ऋ १.११३,९; वि ( आवः ) ऋ ८, ९, १६; शौ २०,१४२,१†; विवः ऋ १,६२,५;वि…वः ऋ १,६३,५[i]; †वि…वः ऋ ५,३२, १; कौ १,३१५; जै १,३३,३.

वि-वर्[j]– -रे ऋ १, ११२,१८.

**वि√वृ** (=√वश्(<सँ) (दोप्तौ),
†विवः[k] ऋ १०,२१,⌊१-८;२४, १-३; २५, १-११⌋; †कौ १, ४२०; ४२२; जै १,४१,२; ४.

**वि-वृक्ण**– वि√वृश्च् द्र.

¶**वि√वृज्** ,ञ्ज्, विवृञ्जन्ति क ४०, १[?1]; विवृजेत् क ४०, १[?m];

**वि√वृत्** , >वर्ति, ¶वि…वर्तते मै २, ३,९; काठ ८, ६; १२, ११; क ७,२; विवर्तेते ऋ १, १८५, १; ६,९,१; वि…वर्तन्ते ऋ ५, ५३,७; विवर्तताम् शौ १०, १, १९[n]; विवर्तन्ताम् ऋ १०,९४, १४; विवर्तस्व पै २,७७,३. विवर्ति पै ९, २५,४. †विवावृते[o] ऋ १, १६४, १४; १६६, ९; ८, १०३,२[p]; १०, ३३,९; शौ९,१४,१४; पै १६, ६७, ४; वि ( अवृतत् ) शौ ३, ३१,२[?]; वि( अवृतताम् ) शौ ३, ३१, ४; वि…अवृतन् शौ ३, ३१, १[q]; वि( अवृतन् ) शौ ३, ३१,३; ४; वि( अवृतः ) शौ ३, ३१, १; वि[?] ( अवृतम् ) शौ ३, ३१,१-११.

वि…वर्तयन् ऋ ५, ४८, ३; विवर्तय शौ ११,२,२१; पै १६, १०६,१; †व्य(वि-अ)वर्तयत्[r] ऋ ८,१४,५, कौ १,१२१;२,९८९; जै १,१३,७; शौ १०, ७,२६$; २०, २७, ५; पै १७, ९, ७$; वि…अवर्तयत् ऋ ६,८,३.

वि⌊,वी⌋वर्त[s]– -र्तः मा १४,२३; का १५,७,२; तै ४,३,८,१; ५, ३, ४,५; मै २, ८,४; काठ १७,४; २१, १; क २६, ३; ३१, १६; –र्तैं[t] कौ १,७७; जै १,८,५.

---

a) सपा. आपमं २,११,३० । काठ १६,९ अपव्रन् इति पाभे. । b) प्रपु१ ।

c) वैतु. सा.<√वस् 'निवासे' इति ? ।

d) मपु१ इति GW. ।

e) व्री इति संहितायां दीर्घः ।

f) प्रपु१ (तु. पपा.; वैतु. GW ऋ १, १२१, ४ इत्यस्य पपा. अनु वः इत्येवाऽत्र पदमिति । उभयत्राटः समानमनुच्चार्यमाणत्वादिति दिक् ⌊तु. ?ORN.⌋) ।

g) तु. वें. GW.; वैतु. सा. उच्छन्तीः इत्यनेन संयोजयँश्चिन्त्यः । h) मपु१ । i) तु. सस्थ. टि. आ ।

j) नाप. (छिद्र-) । गस. उप. अबन्तम्, थादिस्वरश्च ।

k) लुङि मपु१ । 'हे अग्ने, मदे ( मदाय ⌊तु. पृ २४१४ *d*⌋, त्वम् ) विवः ( प्रज्वल ) इति वा. ( वैतु. अन्यके समे वः इति युष्मदः ष३ इति कृत्वा ⌊वि√मद् >⌋ वि…मदे>विमदे ⌊सत१⌋ व्यप. इति समस्तं पदमिति वा वि इति क्रिउ. इति वा ⌊तु. PG. २, २२८, सा. GW.प्रभृ.⌋ ?) । l) पाभे. पृ २८३९ *i* द्र. ।

m) पाभे. पृ २८३९ *l* द्र. ।

n) सपा. पै १६,३६,९ वर्तताम् इति पाभे. ।

o) °वव्रृ° इति पपा. । p) तु. सस्थ. टि. २अनु ।

q) वि…अवृतन् ( तु. PW. RW. प्रभृ ) इति पाठः? यनि. दिशा शोध इति (तु. W.; वैतु. सा. वि…अवृतम् इत्येवं शोधयितुकामश्चिन्त्यः) ।

r) ऋ. वि अवर्तयत् इति पपा. स्वरः? यनि. शोधः ।

s) नाप. । मै. काठ. क. वी° इति पाठः ।

t) पाभे. पृ ९४७ *o* द्र. ।

†वि-वर्तन- -नम् ऋ १, १६२, १४[a]; मा २५, ३८[a]; का २७, १३,७[a]; तै ४, ६,९, १[a]; मै ३, १६,१[a]; पै ११,७,५$[b].
वि-वर्तमान- -नाय मा २२, ८; का २४,३,५; तै ७, १, १९, ३; मै ३,१२,३; काठ ४१,१०.
वि-वर्तय(त्>)न्ती- -न्तीम् ऋ ७,८०,१.
वि-वर्तयित्वा मै १,६,१२¶.
वि-वर्त्स्यत्- -त्स्यते तै ७, १,१९, ३; काठ ४१,१०.
वि-वृत्[c]- -वृत् मा १५,९; का १६, २,६; तै ४,४, १, ३; -वृते मा १५,९; का १६,२,६.
वि-वृत्त- -त्तः ऋ १०, २७, २१; -त्ताय मा २२,८; का २४, ३, ५; तै ७, १,१९,३; मै ३,१२, ३; काठ ४१,१०.
वि-वृत्ति- -त्तिः पै १६,२९,९[d].
?विवृत्त्या पै १,९८,४.
वि√वृध्, विवावृधे[e] ऋ १,१४१,५; विवावृधे[e] ऋ ९,१०८,८; कौ २, ७४५†; विवावृधुः ऋ ५,५९,६.
वि-वर्धन- -नात् पै २०, ५२,१३.
वि√वृश्च्, विवृश्चति ऋ ३,५३,२२; विवृश्चन्ति शौ ७,५८,७; पै १, ४८, ४; विवृश्च पै २०, ७, ७; विवृश्चत् ऋ १, ६१, १०; २, १९, २; शौ २०, ३५, १०†; विवृश्चत् ऋ ३, ३३,७; ५,२९, ६; विवृश्चः ऋ ४,१७, ⌊७(१९, ३)⌋; व्यु( त्रि-श्च )वृश्चत् ऋ १०, ११३,६.
†वि-वृक्ण- -क्णा ऋ १, ३२, ५; मै ४,१२,३; पै १३, ६, ५.
वि-वृश्चत्- -श्चन् ऋ २,१५,६.
वि√वृ, बृह्, विबर्हामः पै ७, १५, ४; विबर्हेः पै ३, २५, १३[f]; १९, ३५, १४; विबर्ह पै १७, २९,१७[f].
†विवृहामि ऋ १०, १६३, ⌊१-३[g],४[h];५;६[i]⌋; शौ २,३३,१-२; ४-५; ६$; २०, ९६, १७-१८; २०-२१; २२$; विवृहामः शौ ६,१२७, ३; विवृहामसि शौ २, ३३, ३‡[g]; ७‡[i]; ६, ९०, १; २०, ९६, १९‡[g]; २३‡[i]; पै ४, ७,१-३‡[g]; ४; ५; ६‡[h]; ७‡[i]; १९, १८, २; विवृह ऋ १०, १०,८; शौ १८, १,९†; वि··· वृह ऋ ६,४५,९; वि···वृह ऋ ८, ४५, ८; †विवृहतम् ऋ ६, ७४,२; तै १,८, २२, ५; मै ४, ११, २; काठ ११, १२; शौ ७, ४३, १; पै १, १०९, १; विवृहत>ता, वि[?]( वृहता ) ऋ ८, ६७, २१; †वि···वृहेव ऋ १०, १०,७; शौ १८,१,८.
विववर्ह>र्हा ऋ २, २३,१३.
¶व्यवृह्यत काठ ८,१; क ६, ६; विवर्हि ऋ ३, ५३,१७.
वि-बर्हण- -णम् पै १९, २८,१५.
वि-बृहस्[j] (:) काठ २७,१०¶.
वी( <वि )-बर्ह[k]- -र्हेण ‡शौ[l] २, ३३, ७; २०, ९६, २३.
?विवृहात्[m] शौ १८,१, १०‡.
वि√वे>व्युं( वि-उ )त- -तम् ऋ १, १२२, २; मै ३, ९, ४¶; -ताः मै ३,९,४¶; -ते ऋ ३, ५४,९.
वि√वेन्[n], विवेनतम् ऋ ५,७५,⌊७; ७८,१⌋; विवेनः ऋ ५, ३१, २; ३६, ४; ६,४४,१०.
वि√वेप्, विवेपताम् पै २०, ५०,६.
वि-वेविदत्- वि√विद् (लाभे) द्र.
वि√वेष्ट्>°ष्टि, विवेष्टयति मै ४, ४,४; विवेष्टय शौ १२, ११,७.
?विव्यज्मि √*व्यच् द्र.
वि√व्यथ्, विव्यथः पै १९,३४,२.
वि√व्यध् वि√विध् द्र.
विव्याच √व्यच् द्र.
?विव्ये[o] मै ४,९,१७.
वि-व्रत[p]- -तयोः ऋ १०, १०५, ४; -ता ऋ १,६३,२; ८,१२,१५; १०, ४९, २; १०५,२; -ताः[q] मै २,२, ६; काठ १०, १२; शौ

a) पाभे. पृ १८३१ *u* द्र.।
b) सपा. शौ १०, ४,७ पै १६,१५, ७ **परायणम्** इति पाभे.। c) तु. प्र-वृत्- । d) सपा. शौ ८,८,९ व्यृद्धिः इति पाभे.। e) °ववृ° इति पपा.।
f) सपा. °र्हेः <> °र्ह इति पाभे.।
g) सपा. विवृहामि ते <> विवृहामसि इति पाभे.।
h) सपा. विवृहामि ते <> विवृहामसि इति पाभे.।
i) सपा. विवृहामि ते <> विवृहामसि इति पाभे.।
j) उप. तुमर्थीयः कसुन् प्र.।
k) नाप.( विकर्तनोपकरण-भेद-,तादृक्कर्मकृतसूक्त-विशेष-? ⌊तु. कौसू २७,२७⌋) । सा. वीव' इति द्वित्रकारः पाठः (वैतु. कौसू. यनि.)। l) सपा. ऋ १०,१६३,६ विभे.।
m) बिभृयात् इति शोधः ( तु. ऋ १०,१०, ९; वैतु. WI. <वि√वृह् इति ) । पाभे. पृ २३७४ *e* द्र.।
n) धा. कान्तौ वृत्तिः ( निघ २, ६ या १०, ३८)।
o) तु. सस्थ. टि. ?विव्ये।
p) विप. (विरुद्धकर्मन्- ⌊हरि- प्रभृ.⌋)। बस.।
q) पाभे. पृ २८८८ *m* द्र.।

३,८,५; ६, ९४, १; –तानाम् ऋ १०, २३, १; कौ १, २८८; ३३४†; जै १,३०,६; ३५, ३†; –तेन ऋ १०,५५,३.

√विश् (बधा.), > वेशि, विशते पै १२,२,११[a]; विशाते पै १३,५, ५; विशाथः[b] शौ ४. २५, १; पै ४,३४,१; विशामसि पै ६,२०, ९[c]; ?विशत्[d] ऋ ९,१०७,१०; कौ १,५१३; २,१०३९; जै १, ५३,३; विशतु पै १६,१५२,३; विशन्तु काठ १, ९; ३०, ८[e]; क १, ९; शौ १२, ३, ३२; पै १७, ३९, २; २०, २१, १[२]; विश खिसा २९.४२; पै ६,२२, १९; विशै तै ३, ५, ६, १; अविशत् पै १३,५,२२[२]; १७, २८,१.

विवेश पै १, ४५, २; ७०, १; १३, ५, ४[f]; १७, ३०, ४[g]; अविक्षत ऋ १०, १३६, २.

वेशयन्ति पै ८,१५,४; वेशयामि शौ ३, १३, ७[h]; पै ३,३७, १; वेशयामसि पै २,४०,५[h].

विशत्– -शन्तः पै १३, ७, १६‡[i]; २०,४८,८.

विशन्ती– -न्ती काठ ७, ७¶.

?विष्ट्वा पै ९,१२,४.

वेशन– -नम् पै ९,२५,७.

?वेशस्– -शसः[j] शौ २,३२,५?;५, २३,१२?; पै २,१४,३?.

वेश्मन्[k]– -श्म ऋ १०,१०७, १०; १४६, ३; पै १०, १२, २; –श्मनि शौ ५, १७,१३; ९,७, १३; पै १६,११३,६.

विश् (बप्रा.)[l]– †विक्षु ऋ १, ४५,६; ५८, ३; ६०,२; ४; ६६, २; ३; १००,१६;१४८,१;१५३,४; २, ४,२; ३; २१, ३; ३१,२; ३,५, ३; ४, ६, २; ७; ८; ७, २; ९, २; ३७,१;३; ५, १७,४; ६,१, ६; २, ७;५,३;२१,४;४१,५[m]; ७, ३४, १२; ४३,५; ५६,२२; ६१, ३; ६७,७; ७०, ३;१०४, १८; ८,६, ⌊(६, ४६,७) २४⌋; २३, १०; ३९,७; ७१,१५; ९, ३८, ⌊(५७, ३; ८६, २५)४⌋; १०, १, ४; ७,५;१५,२[n]; ४०, १४; ४८, ८; ६१,१५; ७९,१; ⌊(३,१४,५;६,१६,४६)२⌋;८७, १०; मा ४, ३१‡[o]; १५, ३१; १९,६८[n]; का ४,१०,२‡[o];१६, ५, १३; २१,४,१७[n]; तै १, २, ८, २‡[o]; २, ६,१२,४[n]; ४,४, ४,३;१२, २$; ६, १, ११,३[२]; ‡[o]; ¶; मै २, १३, ७; ३,१६, ४$; ४, १०, ६[n]; १३,६; १४, १५; काठ २, ६‡[o]; ४, ९‡[o]; ८, १७; १८, २०; २२, १४$; ३९-४०, १४; क १, १९‡[o]; कौ २, ६२६; जै ३,५२,७; ४, १४, ९; शौ २, २, १$; ८, ३, १०; ४, १८; ९, ५, १९$; पै १, ७, १$; २, ३०, ३; १४, ४, ५$[p]; १५, १,६$; १६,६, १०; १०, ८;९९,५$; विट्,ड् ऋ १, ७२, ८; ७, ५६, ५; ९, ८८, ७; मा १०,१२; का ११, ५, ३; तै १, ८, १३, १; ¶२, १, ४, ८[२]; ३, १,३[२]; ४; ¶३, ५, ७, २[२]; ३; ४, ३,३,१; ५, ४, ७, ७¶; ६, ६,५,३¶; ¶मै १, ६, ५; १०, ६; १३[२]; २,१, ८[२]; ९[२]; २, ३; ५,८; ६,१०$; ७, २०$; १३, १५$; ३, ३, १०[२]; ८, ७[२]; ४, २, ६; ३,८; ९; ४, ९; १०[२]; ६, ८[२]; ७,८; ¶काठ १०, ११[५]; ११,१[२]; ४;

---

a) **कालेन विशते** > सपा. शौ १९, ५४,१ **काले निविशते** इति पाभे. ।

b) पाभे. पृ २३७३ *e* द्र. ।

c) सपा. शौ १९,४७,९ **वसामसि** इति पाभे. ।

d) = मपु१ इति कृत्वा ***विशस् हुरिः** > **विशद्धुरिः** इति नैप्र. वाचनिकविकार इति विमृश्यम् (वैतु. पपा. प्रभृ. यनि. प्रपु१ इति कृत्वा वा. उत्पीडुका इव ?) ।

e) सपा. शौ २, ३४,१ पै ३,३२,२ **सचन्ताम्** इति, तै ३,१,४,२ **सन्तु** इति च पाभे. ।

f) शोधार्थं पृ २४६८ *w* द्र. ।

g) पाभे. पृ २२०८ *a* द्र. ।

h) सपा. **वशयोमि**<>**वेशयामसि** इति पाभे. ।

i) सपा. ऋ २,१२,१५ **विश्वह** इति पाभे. ।

j) °**सो अस्य वे**° इति पाठः? °**सोऽस्य** (तु. पै. मूको.) **स-वेशसः** इति शोधः । ***स वेशस्–** इति च नाप. (समानगृहभागिन्-) । सहितं (संगत्य) विशतीति कृत्वा उस. उप. कर्तरि **असिः** प्र. तत्स्वरश्च ।

k) नाप. (निवास-गृह-) । अधिकरणे **मनिन्** प्र. ।

l) *भाप. (व्यवहार-), नाप (गृह-, प्रजा- ⌊तु. निघ २,३⌋, वैश्य-) च ।

m) सपा. तैब्रा २,४,३,१२ **युत्सु** इति पाभे. ।

n) पाभे. पृ १६३१ *l* द्र. ।

o) पाभे. पृ १६३१ *j* द्र. ।

p) सपा. शौ १९,४९,५ **दिक्षु** इति पाभे. ।

१३, ३[२]; १५, ७$; २१, १०[२]; २८,२; २९,८[३]; ९;१०[२]; ३६, ७[२]; ३७, ३-५; ३९, ८$; ¶क ४४,२; ४६,३[२]; कौ २,८२३†; जै ४, ४, ४†; पै ५, ५, ५; विड्भिः ऋ १०, २८, ८; विड्भ्यः खि ५, ५, ८; शौ ३, ३, ३; पै २, ७४, ३; विशः ऋ १, २५, १;३१, ५;३५,५[a]; ४४, ७; ५०, ५; ६९, ३[२];७७, ३; ९६, ३; १४४, ३;११७,२; १२१, १; १२७, २[२]; १७२,३; १७४, २; २, १, ८; ११, [४; (३, ३९, ६) १०, १४८, २]; २४, १०; ३, ६, ३; ४,२,३[b]; २४, ४;२८,४; ५०, ८; ५, ८, २; ३; ५६, १; ६, १, ७;८,४; १४, २; १६, ९; २५, २; २६, १; ४७, १६; ४९, १५; ७,५, २; ३; ६, ५; ७, ६; १०, [५; (१०, ४६, ४)]; ३१, १०;३३, ६; ६९,[२; १०,४१, २]; ७९, २; ८, ६, ४; २७; ११, [८[c]; ४३, २१]; १२, २९; १३,१६; २८; ३५,१८; ६९,३; ७५, ८; ९६, १५; ९, ७, ५; ९४, १; १०, ११, ४; ४०,६; ६९, १; ९; ८०, ६; ८३, २; ९१, २; १२४,८; १७३, १; ६; मा ६, ६; ७; ७, २५; ८, ४६; †१२, ११;५५; १५,६०†; १७, २४†; ८६[३]; २०, ८; २१, १९; २८, १४; ३८, १९; का ६, १, ७; २,१; ७, १०, ३; ८, २१, १; †१३, १, १२; ४, ११; १६, ७, ३†; १८, २, ९†; ७, ७[३]; २१, ७, ७; २३, २,८; ३०, २,३; ३८, ५, २; तै १, ३,६, २; ७,१; २,२,५,७¶; ६,११, २†; ३, १, ८, २[२]¶; २, ८, ६†; ३,११, २†; ४,४,१; ११, ६†; ४, †२, १, ४; ४, ४; ६, २, ६; ५, ६[३]; †५, २, १, ४; ४,७,७¶; ५, ६, ३; ६, १, ५, ३¶; ३, ६, १[२];¶; ७, १, २०, १†; मै १, १, ४; ९; २, १४; १५; ६, १०¶; २ ७, ८†; ८, १†;१०, २;११, १[३]; ३, २, ८†; ३, १०[२]¶; ९,६[२]; ११,८; ११; १२,२१[d]; ४, १, ९; ९,१०; †११,४; ६;१२,२; ३†; ६; †१३,६;८; १४,१०†; १२†; १३; काठ ३, ३; ७,१२; १७†; ८, १७; १२, १३¶; १६, १९†; १८, २; ६[३]; २०†; ३५, ७[२]†; ३७, ९†; ३८, १२; ४०, ११†; ५०, ५[d]; †कौ १, १३७; ३२८; ५३९; २, ४८२; १००१; ११४३; ११६४[२]; ३, ५, १०; †जै १, १५, ३;३४,६; ५५,८; ३,३६, ७; ४, २, २; ८, २; २५, ३; २९, ७; शौ ३, ३, ३; ४,२[e]; ६; ४, ८,४[f]; २२, ७; ३२,२†; ५, १, ३; ६, ६१,२; ८७,१†; ९८, २; ७, ९९,१†; ९, ४,९; १०, २, २२[g]; २३; १२, ६,२; १३, १, २; १०; २,२०†; १५, ८, २; ९, १; १८, १, २१†; १९, ४५, ४[h]; †२०, ४७, १७; ७३, ३; १०७, १; १३७, ९; †पै १८, २२, ५; १९, ६, ४; ५[f]; २३, १४; विशःऽविशः शौ ४, २३, १[i]; पै ४, ३३, १[i]; विशा: ऋ ४, ४, ३; ५, ३, ५; १८, १; ६, १५, १४; ७, ३३, १०; १०, १५२, २[j]; मा १३, ११†; का १४, १, ११†; तै १, १,११, २[k]; २,१४, १†; ¶२, ३,१, ४; ५; ३, १,८,२¶; ४, ३,१३,४†; ¶मै २, २, १[२]; ५, ४[३]; ७, १५†; ३, ३, १०; ४, ३, ९[३]; ४, १; २[२]; ३[२]; ९[२]; १०[३]; ६, २; ३; १०, १†; काठ १०, ११[२]¶; ११, ६[३]¶; १२, १३¶; १६, १५†; कौ १, ८५†; जै १, ९, ५†; †विशाःऽविशः ऋ ६, ४९, २; ८, ७४, १; कौ १,८७; २, ९१४; जै १, ९, ७; ४, १५, ७; विशः[1]

a) सपा. तैब्रा २, ८,६,२ दिशः इति पाभे. ।
b) पृ १०२७ *m* द्र. ।
c) पाभे. पृ १६३२ *f* द्र. ।
d) पाभे. पृ १६३२ *c* द्र. ।
e) पाभे. पृ १२५१ *d* द्र. ।
f) सपा. पै ४,२,५ दिशः इति पाभे. ।
g) सपा. पै १६,६१,१ दिशः इति पाभे. ।
h) सपा. पै १५,४,४ दिशः इति पाभे. ।
i) सपा. तै ४,७,१५,१ मै ३, १६, ५ काठ २२, १५ विश्वस्यां विशि इति पाभे. ।
j) =सपा. तैब्रा ३, ७, ११, ४ तैआ १०, १, ९ तैआआ १०,५५ षब्रा ५,१ मना २,५५ आपश्रौ ३,१२, १ । शौ १,२१,१; ८,५, २२ विशाम् इति पाभे. ।
k) सपा. मै १,१, १२ विश्वजनस्य इति, काठ १, ११ क १,११ देवजनानाम् इति च पाभे. ।
l) स्वराऽभावात् पृथङ् निर्देशः द्र. ।

खि ५,५,११; ७,३,३; काठ ३, ४; ८,४¶; १६,८†; १९,११†; १३; २१, १०[३]¶; २५, १०¶; २६,६[२]; ¶; ७[२];¶;२७,५;२८, १[२]; २९, ८[२]¶; ३१,१४; ३७, ३[३];४[३],५[३]; ३८, ४; १०; ३९, १५[२]†;४०,९; ४१,११†; क २, १०;११;६,९¶; †२५, ६; ९; २८,२†; ६[३];३१,१†;४०,३¶; ४१, ४[२]; ¶; ५[२];¶; ४२,५; ४४, १; ४८, ९[२]†; पै २,६५, २; ७४, ३; ३, १, २; ६; ८†; २७, २; ४, १०, ३; २७, ५[a]; ३२, २; ५, ४, १२; ६, २,३; १०, २-३, ६; ११, ५, १४; १६, २४, ९; ४२, ८[b]; १४१, २; १८, १५,२; १०; १९, १२, १४; २१, ९; २३, १३; ५१, १०; ०†विशः[c] ऋ १०, १४१, १; मै १, ११, ४; काठ १४, २; विशम् ऋ ७, ७३, ४; मा ३८, १४; का ३८, २,८; तै १, ४, १०-११, १; ६, १०, ४¶; ¶२, १, ३, ३; ४,८; २,५,७; ११, १; ३, १,३; ४[२]; ५[३]; ३, ५[२]; ५, ४, ७, ७[४]¶; ¶६, ६, ५, २; ३; ¶मै १, $३, १३; २७; ६,५; २,१, ९[३]; २, १[२]; ३; ५, १; ४[२]; ८[२]; ३, २, २; ३, १०[५]; ८, ७; ४, २, ६; ३, ३; ८; ६, ८[२]; ७, ८[३]; ९, ९$; ¶काठ ४, ५$; ५, २$[d]; १०,११[३]; ११, १[२]; ४;६; १२,

१३; १३, ३[२]; २१, १०[३]; २२, १३; २९, ८; ९[२]; १०[३]; क ३, ४; ३५, ६¶; ४६, ३[३]¶; †विशम्ऽविशम् ऋ ७, ७४,१; १०, ४३, ६; ८४,४[e]; ९१, २; कौ १, ३०४; २, १०३; जै १, ३२, २; ३, १०, ५; शौ ४, ३१, ४[e]; २०, १७, ६; विशा ऋ १, ३९, [५; ५, २६, ९ (८,७,४)]; १११,२; २,२६, ३; ८,२८,३; ६३,७; ७३, १८; मा २१,२५; का २३, ३, ३; तै २,३,१, ३¶; १४,३†; ¶५,२, १,४; ६,१०,१; ७, ५, २३,२; ¶मै १,६,५; १०, १४; २, १, ९[२]; ३, ३, १०[२]; ४, ८; ११, १२$; ४, ९, १$; १४, १०†; काठ ७,१;७; २१,१०[२]¶; २२, ४¶; ३६,८¶; ३८, ११; ४५, २०; विशाम् ऋ १, ३६, १; [५; ४४, ९]; ६५, ५; ७०, २; ९४, ५; ९६, ४; ११२, ३; १२१, ३; १२७, ८; १३४, ६; २,२,८;४, १; ३, २, २; [१०; ५,४,३; ६,१,८]; ११,५; १३, ५; ३४,२; ५,१,९; ९, [३; ६, १६,४०]; ६, २, १०; १५, १; ४८,८; ७,७,४; ९,२; ३९, २; ८,२३,२०;४३,२४; ९५,३;९, १०८,१०; १०, २०,४; २२, १०;४६,[(७,१०,५)४]; ६;९२, १;१४; १५६,५; १७३, ४; मा ३३,४४†; का ३२, ४, १†; तै

३,५,११,४†; ६, १, ५, ३¶; मै ३,९,८; ४, १०, ३†; १३, ६†; १४,१२[१]; †काठ १५,१२; १८, २०; ३५,७; ३९,१४$; क ४८,९†; †कौ १,५९; २,३६२; ८८१; ९०६; †जै १,६,५; ३, ३०, ५; ४, १५, १; १९, ३; शौ १,२१, १‡[g]; ३, ४, १; ४, २२,१[h];३; ६,८८,१†; ७,५२, २; ८,५,२२‡[g]; १५,८,३; २०, ११,२†; पै २,८८,४‡[g]; ३, १, १; २१, १; २; ६, ९, ६; १२, १,६†; १९, ६, ९†; ९, ९†; २५,१०; २९,९; २०, १३, ३; ४७, २; ०विशाम् शौ ३, २०, २‡[c]; पै ३,३४,३‡[c]; विशि ऋ ५,२२,[१; ८,७१,११]; ८,२३, १३[i]; मा २०, ९; का २१, ७, ९; तै १,८,१२, २[j]; २, ३, १, २¶; ३,५, ७, ३[२]¶; ४, ७, १५,१[k]; मै २,३,३;५,४[२]¶; ६, ६¶; ९[j]; ३,११,८;१६,५[k]; ४, ४,३;१०¶;६,२; ३; काठ ११, ६¶;१५,७[i];१७,१९;२२,१५[k]; २७,५; २८, २¶; ३८, ४; क ४२,५;४४,२¶; कौ २,९०५†; जै ४,१४,७†; शौ ३,३,५; १३, १,९; पै २, ७४, ७; १८, १५, ९; विशो ऋ १,९३,[८; ७,८२, १]; ५,६,३;४८,४; ७,४२, ४; ८,६०, ६; ९, ८६,१५; ९७, ३०; मा ९, ४०[j]; १०, १८[j]; का ११, ३, २[j]; ६, २[j]; तै १,

a) पाभे. पृ २९०८ *f* द्र. । b) सपा. शौ १०, ६,९ दिशः इति पाभे. । c) पाभे. पृ १८९२ *j* द्र. । d) =सपा. ऐआ ५,३,२ । काश्रौ ३, ४, १० विशः इति पाभे. । e) पाभे. पृ १९७६ *h* द्र. । f) सपा. तैब्रा २,८,४,२ दिशाम् इति पाभे. ।

g) पाभे. पृ २९०८ *j* द्र. । h) वृषाम् इति सा. । i) सपा. विशि <> विशो इति पाभे. । j) सपा. विशि <> विशो इति पाभे. । k) पाभे. पृ २९०८ *i* द्र. ।

६,१,३; २,२,११,२¶; ५,१२, ३†; ७,५,२३,२; मै २,१,९¶; ४, ४, ३¶; ९, ९; १२, ४†; १४,६†; काठ १०,११¶; ३९, १३†; ४५, २०; कौ १,११४‡[a]; २,१०८८†; जै १,१२,८‡[a]; शौ १४, २, २७; पै १८, १४, ७; †विशेऽविशे ऋ १,२७,१०; ४, ७,१;४;५,८, ५; १०, ४०, १; मा ३, १५; १५, २६; ३३, ६; का ३,३,५; १६,५,७; ३२, १, ६; तै १,५,५,१; मै १,५,१;५; काठ ६, ९; क ४, ८; कौ १, १५; २, १०१३; जै १, २,५; ४,९,४; विशौ ऋ ९, ७०, ४; काठ ११,६¶.

वैश्य[b]- -श्यः ऋ १०, ९०, १२; मा ३१,११†; का ३५,१, ११†; ¶तै २, ५, १०, १; २[2]; ७,१,१,५; ¶मै १, ६, ५; ९; ३,१,५; ४, २, ७[c]; १०; ४, २;६;९; ¶काठ ८,३; १२; ११, ६; १९, ४; १२; २०, ४; २६, ८; २९,१०[2]; ३७,३[2]; ¶क ६, ८; ७,७; ३०, २; ३१, २; ६; ४१,६; ४६,३[2]; शौ ५,१७, ९; १९,६,६†; पै ३.१३,८; ९, ५; ६†;१६,७; -श्यम् मा ३०, ५; का ३४,१,५; ¶तै २,३,७,१[d]; ६,४, ८, ३; काठ २७, ४¶; क ४२ ४¶; -¶श्यस्य तै २, ५, १०,२; ६,२,५,३; मै १, ६, ५; ९; २,३, १[2]; ६,५; ३,१,५;२, २; ४.३,८; काठ ८,१;४; १२, १[2]; १५,४; १९, ४; १२; २०, ४; २६,८; ३७,३; क ६,६; ९; ३०, २; ३१, २; ६[2]; -श्याय काठ ३७, १¶; -¶श्येन तै ६, ४,८,३; काठ ८, १;३;४; क ६, ६;८;९.

?विशौजस्[e]- -जाः[f] मा १०, २८; का ११, ८, ४.

विश्-पति[g]- -†तिः ऋ १, २६, ७; २७,१२;३७,८; ६०,२; १२८, ७[2]; ७, ७, ४; ५५, ५; ८,२३, १३; २५, १६; ६०, १९; ९, १०८, १०; १०, ४, ४; १३५, १; तै २, ३, १, ३¶; कौ १, ३९; ११४; २, ३६२; ९६९; १०१५; ११९५$; जै १,४,५; १२, ८; ३, ३०, ५; ४, ९,६; शौ ४, ५, ६;२२,३$; $पै १, ७१, ३; ३, २१, २; ४, ६,६; १९, ४४,२४[h]; -तिना[i] तै २, ३, १,३; काठ ११,६; -†तिम् ऋ १, १२,२; ३१, ११;१६४, १; २, १, ८; ३, २,⌊१०; ५, ४, ३; ६, १,८⌋; ३,८; १३,५; ६, १५, ८; ८, ४४, २६; १०, ९२, १; तै ४, ३,१३,८; मै ४, १०, १; १३,६; काठ १८,२०; कौ २, १४१; ९१८; जै ३,१४, २; ४, १६, १; शौ ९, १४,१; २०, १०१, २; पै १६, ६६,१; -†ती ऋ ७, ३९, २; मा ३३, ४४; का ३२,४,१; -†°ते ऋ ५, ६,५; तै ४,४,४, ६; काठ ३९, १४; कौ २, ३७३; जै ३, ३०, १६; -†°ते ऋ ३,४०,३; ६,२, १०; ७, १५, ७; ८, २३,१४; १०३, ७; मै २, १३, ५‡[j]; ४,१२,४‡[j]; कौ १,२६; १०६; २,३७४‡[j]; ९३४; जै १, ३,६; ११, १०; ३, ३०, १७‡[j]; ४, ११, ७; शौ २०,६, ३; -त्या मै २,२,१[l].

विश्पत्नी- -त्नियै तै ३, १, ११, ४‡[k]; -त्नी काठ ७, १२; शौ ७, ४८, ३[l]; -त्नीम् ऋ ३, २९, १; -†त्न्यै[k] ऋ २, ३२, ७; मै ४, १२, ६; काठ १३, १६; शौ ७, ४८, २$; पै २०,१०,११.

१विश्य, श्या- -श्यः ऋ १०, ९१,२[m]; -श्याः[n] ऋ १,१२६,

a) पाभे. पृ २९०९ *i* द्र.।

b) नाप. (वर्ण-भेद-)। स्वार्थे ष्यञ् प्र.।

c) °श्युः इति पाठः ? यनि. शोधः।

d) भाप. (विट्त्व- =वशवर्तित्व-,किंकरता-)। भावे ष्यञ् प्र.। सपा. मै २,३,७ काठ १२,५ वेशत्वम् इति पाभे.।

e) विश्वौ (श्व ओ)जस्- इति शोधः (तु. ऋ १०, ५५,८; सपा. शांश्रौ १६,१८,४ च)। पपा. नावग्रहः।

f) =सपा. माश ५, ४,४,११। शांश्रौ १६, १८,४ विश्वौजाः इति, तै १,८,१६,१ मै २, ६, १२ काठ १५,८ तैब्रा १,७,१०,३ बौश्रौ ३,१६:५ प्रभृ. सत्यौजाः इति च पाभे.।

g) नाप. (अग्नि- प्रभृ.)। उस. उप. डतिः प्र. (तु. या ⌊४,२६⌋ प्रभृ.; वैतु. सा. षस. इति ?)।

h) °श्वप° इति मूको.।

i) सपा. °तिना<>°त्या इति पाभे.।

j) सपा. ऋ ५,६,९ मा १५, ४३ तै २, २,१२,७; ४, ४,४,६ आश्रौ ७,८,१; ८,१२,५ सर्पिषः इति पाभे.।

k) सपा. °त्नियै<>°त्न्यै इति पाभे.।

l) सपा. पै २०,१०,१३ विश्वतः इति पाभे.।

m) विप. (सर्वप्रजा-व्याप्त- ⌊अग्नि-⌋)।

n) विप. [*व्यवहार-कृत्- =वेश्या-वृत्ति- (त्रा- =स्त्री- ⌊तु. PW. प्रभृ.⌋)]।

५; -श्येन[a] पै १९, २९, १०; -श्येभ्यः[b] मै २,९, ५[c]; -श्येषु[b] तै ५, ७, ६, ४[d]; मै ३, ४, ८[d]; ४, २, ७¶.

२विश्य- -श्यानाम् शौ ६, १३, १; पै १९, ५, १[e]; -श्येषु[d] मा १८, ४८; का २०, २, ११; काठ ४०,१३; पै १९,१८,१५.

वि√शंस्, विशंसति तै ६, ६, ११, ५¶[f]; मै ४,७,५; †विशंसत ऋ ८, १, १; कौ १, २४२; २, ७१०; जै १,२५,१०; ३,५८,७; शौ २०, ८५, १; व्यं (वि-अ) शंसन् तै ६, ६, ११, ५¶[f].

वि-शसे ऋ १०,१४३,३[g].

ϕवि-शस्युमा (न > ) ना[h]- -ना ऋ ३, ३९, ⌊(१)२⌋.

विशत्- √विश् द्र.

वि√शप्, विशपेयाताम् मै १,९,७¶.

वि-शफ- -सम् मै १,९,७¶.

वि-शफु[i]- -फस्य शौ ३,९,१[j].

वि-शर- वि√शृ द्र.

वि-शरीक[k]- -कम् शौ १९, ३४, १०; पै ११, ३, १०.

१वि-शल्य[l]- -ल्यः मा १६, १०; का १७, १, १०; तै ४, ५, १, ४; मै २, ९, २; काठ १७,११; क २७, १; पै १४, २, १५.

२वि-शल्य-, विशल्य-क- वि√श्रृ द्र.

वि√शस्, शास् (हिंसायाम्), †विशस्त ऋ १,१६२,१८; मा २५, ४१; तै ४, ६,९,३; काठ ४६, ५.

विशास्ति मा २३,३९; का २५, ८, १; तै ५, २, १२, १; काठ ५०,६; विशासतु मा २३, ४०; का २५, ८, २; तै ५, २, १२, १; काठ ५०, ६; वि···शासतु मा २३, ४२; का २५, ८, ४; तै ५, २, १२,१; काठ ५०, ६.

वि-शसत्- -सन् पै १४, ३, ६.

वि-शसन- -†नम्[m] ऋ १०, ८५, ३५; शौ १४, १, २८; पै १८, ३,७; -नेन[n] तै ५, ७, २३, १; काठ ५३,१३.

वि-शस्तृ- -०स्तः शौ ९, ५, ४; पै १६, ९७, ३; -†स्ता ऋ १, १६२,१९; मा २५, ४२; तै ४, ६, ९, ३; काठ ४६,५.

विशसे वि√शंस् द्र.

१वि-शाख, खा[o]- -खः तै २,१,९, ३¶; -खाः शौ ८,७,४; पै १६, १२, ४; -खान् पै ५, २४,४[p].

२वि-शाख,खा[q]- -खम् मै २, १३, २०[r]; काठ ३९, १३[r]; -खे तै ४, ४, १०, २[r].

३वि-शा(ख>)खा[s]- -खे शौ १९, ७, ३.

?विशाय[t] पै १, ९,१.

विशाल,ला[u]- -¶लः तै २,१,८,५;

---

a) विप. (लोक-व्यापक- ⌊केतु-⌋)।

b) नाप. (व्यवहार-कृत्- =वैश्य-)।

c) पपा. °श्ये° इति स्वरः ?।

d) सपा. विश्येषु <> विश्येषु (बौश्रौ १७,४१ : २३ आपमं २, ८,४ प्रभृ. च) <> ?विश्वेषु (काहि ११० : ९ च) इति पाभे.।

e) °श्या° इति मूको.। f) तु. सस्थ. टि. अभि।

g) तु. सा. GW. प्रभृ.; वैतु. वें. <वि√शस् 'हिंसायाम्'। गस. केनन्तम् अव्य.।

h) वैतु. वें. सा. वि(भवति) इत्येवं क्रिउ. इति।

i) नाप. इति कृत्वा कर्शफ- इत्यनेन सन्यायतेति PW. प्रभृ ; सा. पपा. अनुसृत्य बस. =विगतशफ-(सर्पादि-) वा विस्पष्टशफ- (क्रूरगोमहिषादि-) वेति। विप. [कर्शफ-(ओषधि- ⌊पृ १०९७ *d* =रोग-विशेष- इति नेष्टम् ⌋)]। वि(प्रति) + शफु- (=सृभ- ⌊कर्तरि <√सृभ् 'हिंसायाम्'⌋) > बस. इति मतम्।

j) पाभे. पृ. २१६० *e* द्र.।

k) नाप.। आ-शरीक- इत्यनेन सन्यायता द्र.।

l) विप. (शल्यरहितबाण-वत्- ⌊इषुधि-⌋)। बस.।

m) विप.(विहिंसक- ⌊रूप-⌋)। गस. उप. कर्तरि ल्युः प्र. (वैतु. वें. भा. सा. ?Gri. वस्त्रविशेषार्थे नाप. इति, PW. प्रभृ. हिंसनार्थे भाप. इति च ?)। वध्वा यद् अमङ्गलतया संभाव्यमानं रूपवैविध्यं भवेत्, तदेवेहात्यन्त-हिंसकतया निरूपयितुं तद्वाचकस्य पर्यायत्रयस्य श्रादणं भवति। n) भाप. (हिंसन-)।

o) विप. (विविधशाख- ⌊यूप-, वीरुध्- प्रभृ.⌋)। बस.।

p) नाप. (रक्षस्-)। व्यु. पृ २९१२ *h* द्र.। सपा. शौ ४,१८,४ विशिखान् इति पाभे.।

q) नाप. (नक्षत्र-भेद-)। r) सपा. °खम् <> °खे इति पाभे.। s) =२वि-शाख-।

t) सपा. शौ १,१०,१ वशा हि इति पाभे.।

u) विप. (विस्तृत- ⌊यूप- प्रभृ.⌋), नाप. (छन्दो-भेद- ⌊मा. प्रभृ.⌋)। (√वृष् '*विस्तारे' > भावे) *वृष्मक- > *वृष्मक-भृत- > *विशकभर- > यनि. (वैतु. पा ⌊५, २,२८⌋ < वि + शालच् प्र. इति, पाउ ⌊१, ११८⌋ <√विश् इति, MW. <वि√श्रि इत्यपि ?)।

काठ १३, ५[२]; -लम् मा १४, ९; १५,५; का १५, ३,२; १६, १,८; तै ४,३,१२,३;५,१;मै २, ८,२;७; काठ १३,५[२]¶;१७,२; ६;क २६,१;५;–०ले[a] पै७,६,८.

**विशाल-यूप्**[b]– -पे तै ५, ६,२२, १; काठ ५०, २.

**विशाला**[c]– >वैशालेय्[d]– -यः शौ ८,१४,१४; पै १६,१३५,८.

**वि√शास्** ( हिंसायाम् )वि√शस् द्र.

**वि√शास्**( अनुशिष्टौ )>वि-शिस्[o]– -शिषः शौ ११,१०,२७; पै १६, ८७, ७.

**वि√शिक्ष्**, विशिक्ष ऋ ४,३५,३.

वि-शिक्षु[f]– -क्षुः ऋ २, १, १०.

१**विशि**(खा >) ख्[g]– -†खाः ऋ ६. ७५, १७; मा १७,४८; का १८, ४, १६; तै ४, ६,४, ५; कौ २, १२१६;–खासः मा १६,५९;का १७,८,१३;तै ४,५,११,१;मै२, ९,९; काठ १७,१६;क २७,६.

२**विशिख**[h]– -खान् शौ ४,१८,४.

**विशिप्रिय**[i]– -याणाम्[j] मा ९, ४; का १०,१,५; तै १,७,१२,२.

†?**विशिशिप्र**[k]– -प्रम् ऋ ५,४५,६.

**विशि-***(श्न >)**श्ना**[l]– -श्नानाम् मै १, ११, ४[j].

**विशि-***( श्न्य > )**श्न्या**[m]– -श्न्यानाम्[j] काठ १४,३.

**वि-शिस्**– वि√शास् (अनुशिष्टौ) द्र.

**वि-शीर्ष्णन्**[n]– -र्ष्णा खि १,११,४.

**वि√श्रृ**[o] > २वि-श( र्य>)ल्य– -ल्यस्य पै १६,७५,१०[p].

विशल्य-क[q]– -कः[r] पै १५, ३, २; –कम् पै १६, ७४,५[s].

**वि√शृ,शॄ** ( हिंसायाम् ),विशरत्[t] पै १९,९,१३; विशरैः[u] शौ १२,३, १८[v]; पै १७,३७,८[v].

विश्‍त>ता काठ १६,१२[w].

---

[a]) शाले ⌊सं१⌋ इति शेषः । [b]) कस. ।

[c]) व्यप. (सर्प-मातृ-) । (वि√शस 'हिंसायाम्'>) *वि-शरव(र्‍ै>)रा–> यनि. । [d]) व्यप. (तक्षकादि- ⌊सर्प-भेद-⌋)। तस्यापत्यीयः प्र. । [e]) भाप. । [f]) विप. (अग्नि-) । गस. उप. उन् प्र. उसं. (पा ३,२,१६८) ।

[g]) विप. ( *पुङ्खवत्- ⌊ बाण- ⌋, *शिखण्डवत्- ⌊कुमार-, रुद्र-⌋) । वि + शिखा–> प्रास. *वि-शिखा– + मत्वर्थे अच् प्र. उसं. (पा ५,२,१२७ ⌊तु. पपा. नावग्रहः; वैतु. सा. उ. म. PW. प्रभृ. शिखारहितार्थे बस. इति ?⌋) ।

[h]) नाप. ( हिंसाकृत्- ⌊रक्षस्-⌋) । (√वृष् 'बलात्कारे, क्रौर्ये' > भावे) *वृषि–>*वृषिक–>यनि. । *वृषस्– ( *वृषि- ) > *वृषस्य–>विशाख– इति पर्यायभूतः पाभे. पृ २९११ *p* द्र. । सा. W. वि-शि° इति पपा. अनु शिखारहितार्थे बस. इतीव ? ।

[i]) विप. ( *सोमप्रपूर्ण- ⌊ग्रह-⌋) । (√वृष् ⌊=√हृष्⌋ 'हर्षे = मदे' > ) *वृषि– ( *सोम- ) + ( √प्री 'पूर्तौ' >भावे ) प्रियु– ( *पूर्ति- ) > बस. *वृषि-प्रिय– >*विशि-प्रिय– इति (वैतु. वि-शि° इति तै. पपा. अनु उ. म. PW. प्रभृ. बस. उप. शिप्र–>शिप्रिय– इति इतीव ?) । [j]) सपा. विशिप्रियाणाम् (माश ५,१, २,८ च ) <> विशिश्नानाम् <> विशिश्न्यानाम् (चाअ १४:६ च) इति पाभे. ।

[k]) व्यप. (मनु-प्रतिद्वन्द्विन्-)। (वि√*शिप् ⌊=√सिभ् =√सृभ्⌋>शिशिप् 'हिंसायाम्'>कर्तरि) यनि. ( वैतु. °शि-शि° इति पपा. अनु वें. सा. PW. प्रभृ. पूप. =विश्–>सत१ इति, उप. = शिप्रा–⌊हनु-⌋ इति; LR. पाठः ? इति कृत्वा *विशिप्रिय– ⌊<वि+शिप्रा-⌋ इति शोधः इति, सा ⌊पक्षे⌋ =वि-शिप्र– ⌊विगतहनु-⌋ इति च) ।

[l]) विप. स्त्री. ( सोमपूर्णा- ⌊*ग्रहिका- = ग्रह-⌋ ) । *विशि-प्रिय– इत्यस्य पर्यायः । तद्वदिहापि *वृषि– (सोम- ) +( √सन् 'संभक्तौ = लाभे, पूर्तौ'> भावे ) *सन्य–> बस. *वृषि-स( न्य> )न्या–>विशिश्न्या– (= नाउ.) >यनि. । विश-स्ना– इति पपा., विश–(= वृष–=सोम-) इति पूप. । शेषं समानम् ( वैतु. BW. MW. वि+ शिश्न– ⌊ पुच्छ- ⌋ बस. > यनि. इति ? ) । प्राति. स्त्रीत्वम् ? पर्यायभूतेष्वेतेषु त्रिष्वपि प्राति. वृष– (सोम- ) इत्येव पूप. सत् उप. योगे सति वात्रि. इकारान्तनामाऽत्र- मित्यत्र मै. पपा. ज्ञापकः स्यात् । [m]) = विशिश्ना– ।

[n]) वि॰.(विगत-शिरस्- ⌊विदथ-⌋) । बस. अन्तोदात्तः (पा ६,२,१७७) । वैप २,९२८ विशीर्षन्– इत्याद्युदात्तं द्र. ।

[o]) = √सृ = √सृप् । धा. बाधायां वृत्तिः ।

[p]) तु. मूको. BKA.; वैतु. शौ ९, १३, २० अनु र. विसल्पस्य इति ? ।

[q]) नाप. (रोग-भेद-) । स्वार्थे कः प्र. । [r]) सपा. शौ १९,४४,२ विसल्पकः इति RW. °ल्य° इति पाभे. ।

[s]) तु. BKA. मूको. च; वैतु. र. विसल्पकम् इति ? ।

[t]) सपा. शौ ६,५६,१ विष्परत् इति पाभे. । [u]) मपु१ एकारस्य ऐ इत्यादेशः । [v]) तु. RW. W.WI.; वैतु. शंपा. सात विशरीः इति ।

[w]) पाभे. पृ १९७१ *p* द्र. ।

वि-शर॒[a]- -¶रः तै ७, ५, ७, १[b]; क:ठ ३३,७;-रम् पै ११.२,१०; -रात् शौ २,४,२.
वि-शीर्य[c] पै १४,२,१४.
?वि[२]···श्र्त्या पै १९,३६,७.
वि√शो,विश्य पै ३,५,५[d].
?वि॒शौजस्- विश्- द्र.
वि√श्चुत्, ¶विश्चो॒तति मै ३, ९, ७[२]; १०,१.
विश्-प॒ति-,°त्नी- विश्- द्र.
विश्प॒ला[e]- -लाम् ऋ १, ११२,१०; ११७,११; १०,३९,८; -लायाः ऋ १,११८,८?[f]; -लायै ऋ १, ११६,१५.
विश्प॒ला-वसु[g]- -सू ऋ १,१८२,१.
?विश्य[h] पै २,८५,५.
१विश्य॑-, २विश्य॒- विश्- द्र.
वि√श्रथ्,>°थि, †वि॒शश्रथे ऋ ९, ७०,२; कौ २,७७४.
वि॒श्रथय[i] शौ १२, ११, १०; †वि॒···श्रथाय[i] ऋ १,२४,१५; २,२८,५; मा १२,१२; का १३, १,१३; तै १,५, ११, ३; ४, २, १,४; मै १,२,१८; ४, १४, ९; १७[j]; काठ ३, ८; १६, ८; ४०, ११; क २, १५; कौ ३, १,४; जै २, ५, १; शौ ७, ८८, ३; †वि॒···शिश्रथः ऋ २, २८, ७; ४,१२,४[k]; तै ४,७, १५,७[k]; मै ४,१४,९; काठ २,१५[k].
वि॒श्रयमाण- त्रि√श्रि द्र.
*वि॒-श्रवण[l]->वैश्रवण॒[m]- -णः शौ ८,१४, १०; पै १६,१३५,६.
वि॒-श्रवस्[n]- -वसम् खि ५, ७, १, १०; मै४,१३,२; काठ १५,१३.
वि√श्रि,>श्रायि,वि॒श्रयन्ते ऋ ७, ७८, १; †वि॒श्रयाते[o] ऋ १०, ८५,३७; पै १८,१०, ९; वि॒श्रयाति शौ १४, २, ३८‡[o]; वि॒श्रयन्ताम् ऋ १, १३, ⌊६; १४२,६⌋; २,३,५; ७, १७, २; १०,११०,५; खि ५, ७, १, ६; मा २०,४०; २८,५; २९,३०†; का २२,४,५; ३०, १, ५; ३१, ४,६†; मै ३, ११, १; ४, १३, २;३†; काठ १५,१३;१६,२०†; ३८,६; शौ ५,१२, ५†; वि॒··· श्रयन्ताम् खि ५, ७, १, ६; मै ४, १३, २; काठ १५, १३; वि॒श्रयस्व शौ ९,५,८[p];१८,४,३. वि॒श्रय काठ ३७,९; शौ ९,५,४; पै ४,३,१; १६, ९७, ३; वि॒श्रयध्वम् ऋ ५,५,५; १०,७०,५. वि॒···अश्रेत् ऋ ७,३,४. वि॒···अशिश्रयुः ऋ ७, २, ५.
वि॒-श्रयमाण,णा[q]- -†णः ऋ ७, ४५, ३; मै ४, १४, ६; -øणाः मा २९,५;का ३१,१,५;तै ५,१, ११,२;मै ३,१६,२; काठ४६,२.
वि॒-श्रित,ता- -तः खि २,६,२,२८; पै २०, ४१, २; -ता ऋ १, ११७,१; -ताः ऋ १,५५,२.
वि√श्रु,>श्रृ,†वि॒शृण्विरे ऋ ४, ८, ⌊६; ८,(५३, ७) ५४, ६⌋; खि ३, ५ ७?[r]; काठ १२, १५; व्यश्रोत खि ५,७,४,१५. विश्रावि ऋ १०,९३,१४.
वि॒-श्रुत- -तम् ऋ १, ५२, ११; शौ १५,२, २६; -†ताय ऋ१, ६२, १; मा ३४,१६; का ३३, १,१०.
?वि॒श्रुती[s]- -०ति मा ८,४३; का ९,

a) भाप. (क्षयण- ⌊तै.⌋), नाप. (रोग-भेद-)।
b) सा. PW. प्रभृ. विप. इति चिन्त्यम् (तु. भा. K.)।
c) पाभे. पृ २२१३ *e* द्र.।
d) पाभे. पृ २८६५ *q* द्र.।
e) व्यप. (स्त्री-)। वि॒श्- (प्रजा-)+पा-॒ल॒->√पालि>पा(॒ल॒>)॒ला->*पु॒ला->उस. यनि. इतीव PW. प्रभृ.?।
f) °लायै इति सा. GW. प्रभृ.।
g) विप. (विश्पलानुग्राहुक- ⌊अश्विन्-⌋)। बस.।
h) शोधः ?शते मा:तनू° टि.।
i) लोटि मपु१। पपा. श्रथय इति। संहितायां वैकल्पिको दीर्घः।
j) सपा. कामा १२६ : १४ वि॒···श्रथय इति पाभे.।
k) सपा. मै ३,१६,५ शिश्रथः इति पाभे.।
l) व्यप. [विशद-यशस्- (यक्ष-विशेष- ⌊कुबेर-पितृ-⌋)]। बस. उप. =श्र॒वस्-।
m) अपत्यार्थे अण् प्र. (पा ४,१,११२)।
n) विप. (त्वष्टृ-)। बस.।
o) सपा. °ते (कागृ २५, २२ च)<>°ति<> आपमं १, ११, ६ भागृ १, १५ : १४ हिगृ १, २०, २ विस्रयातै, पागृ १,४,१६ विहर इति च पाभे.।
p) पाभे. पृ २८३३ *i* द्र.।
q) विप. (दुर्-, सवितृ-)। गस. उप. शानजन्तम्।
r) °रे इति स्वरः? यनि. शोधः (तु. ऋ.)।
s) विप. (गो-)। (√वृष् 'वर्षणे = क्षीरक्षरणे'>भावे) *वृ॒ष्- > *वृ॒षूवती-> यनि. (तु. पपा. नावग्रहः, ⌊प्राति. ईकारान्तत्वमात्रे⌋ भा., ⌊तात्पर्यमात्रे⌋ च PW. प्रभृ.; वैतु. उ. म. प्रभृ. वि√श्रृ,श्रु 'श्रवणे' > वि॒-श्रुति-

६,२; तै ७,१,६,८.
**१विश्व,श्वा**[a]- -श्वः ऋ १,७०,२; १२८,६;१६६, ५; २, ३८, ८; ४,३८,३;५,३४,७;५०,१[२?b/c]; ७, १८, ४; ३२, १७; ५८, २; ८,३१,१२;५१,९; ९, ३५, ६; १०, २८, १; ६३,[(१,४१,२; ८,२७,१६) १३]; खि ३,३,९; मा ४,८[२b/c];११,६७[२b/c]; २२, २१[२b/c]; ३३, ८२; का ४, ३, २[२b/c]; १२, ७, २[२b/c]; २४,७, ४[२b/c]; ३२, ६, १३; मै १, २, २[२b/c];२,७,७[२b/c];३,६,५[२b/c]; काठ २,२[२b/c];१६,७[२b/c]; २३, २[२b/e];४३,५$; क १,१४[२b/c]; ३५,८[२b/c]; कौ २,९५९; जै ४, १९,१; पै १४,३,२$;१७,२९, १७; -श्वम् ऋ १,१६, ८;३१, ९;३६,४;६; १४;२०; ३७,१५; ३८, १०;४१, [६(८,८४,३)]; ४८, ८; [४९, ४; ५०, ४; ३, ४४,४]; ५०,५; ५२, १३;१४; ५७,२; ६; ७३,५; ८;८१, [५; १०२,८;९;५,६,६; १०,१३३, २];८५,३;८६,१०;९२,९; ९३, [३; ८, ३१,८; १०,८५,४२][d]; ९८, १; १०८, २; ११४, १; १२९,४; १३०, ८; १६४,४२; ४४; १८५, १; १८६, १; ९; २, २, ५; ५, २; १५,४; २२, ४; २३, [१९; २४, १६; ३५, १५]; २४, १२; ३३, १०;३८, ५; ४०, ५; ३, ४, ५;२९,१५; ३०, ६[e]; १४; ५४-५५, ८; ४, १, १; ५, ११; ६,१; १७, १०; ५४, ४; ५८, ११; ५, २८, २; ३२, १०; ४१, ७; ४८, २; ५०, ३; ६३, ७; ८१, ५; ८३, २; ९; ६, ८,३; १३, ४; १६, २७; २८; २०, २; १३;२५,८; ३१, २; ५२, १५; ६०, ४; ७, ७, २; ६;१६, ६;२०, ३; ५६, २०; ५९, ७; ६६, १५;७६,१; ७७, १-३; ९०, ६; ९८, ६;८, ३, १६; २०, २६; २४, २१; २६, ६; ३९, ७; ४०, ४; ४१, ३; ४७, १३; ४९, ८; ५८,२; ७८, ५; ७९, २; ८९, ६; ९, ६१, १८; ६३, ५;६८, ९;८६, २८; १०, २, ४[f]; ११, १;१७, १; १०; २०, [१०; ९९, १२]; २२, ११; २७, २२; ३५, १३; ३६, ४; ३७, २; ४; ५६, ५; ५८, १०; ६१, १२; ६४, १५; ८३, १;८८,१५; ९२, ५; ९६, ५; १०७,१; ८;११४,४;१२१, ७[g]; १२६, ४; १३६,१; १७३, ४; खि ३, १, ८; १८, १; ४, १०, १, १;२, १; खिसा ३, ८; मा ४,२†; ८ ६२;९,५; १३, २४; १४, १४; १५,५८; १६, ४८†; †१७,१६; ९९; १८,५; ७; ३०; ३१†; १९, ३७†[d]; ४७†; २०, २३; २३,४९;५०, २६, ७†; २७, २५†[g]; २८; २९; २९, ९; ३२, ८; †३३, ३४; ३६; ५२; ३४, ५८†; का ४, १, ३†; १०, २, १; १४, २, १०;१५, ४,३; १६, ७,१; १७, ८, २†; १८, २, १†; १९, १, १२†; ३, १; ३; २०, १, १; २†; २१, ३,८†[d]; १८†; २२, १, ८; २५, ९,५; ६; २८, ७, १†; २९, ४,३†[g]; ३०, ३, ६; ३१, १, ९; †३२,

इति प्राति. इति, PW. प्रभृ. विश्रुति- इति प्राति. इति च?)।

a) बप्रा. सत् सना., विप. (सर्व-), नाप. (*नृप- [ऋ १,७०,४], पृथिवी- [शौ ९,११,४])। नृपार्थे विश- (नृ-, जन-)+(√भृ 'धारणे' > भावे)*भ्र->*व- > बस. यनि.। अन्यत्र <√विश् '*संघात-निवासयोः'।

b) पाठः? विश्व-+*वृत्- (अभिलाष-) > बस. *विश्व-वृत्- (यत्किञ्चिद्-वरेच्छु-) इति शोधः (तु. छन्दः)। विश्वे (तै १, २, २, १ प्रभृ.) इत्यत्र टि. अपि द्र.।

c) **विश्वो देवस्य** (ऐब्रा ४, ३२;५,५;१९ शांब्रा २०, ३ माश ३,१,४, १८; ६,६,१,२१; १३,१, ८,८ आश्रौ ७, ६, ६ शांश्रौ १०, ३, ११ काश्रौ ७,३, १५; २०,४, १० माश्रौ २,१,२, १; ६,१,३, २० मागृ १, ६,२;२३, ६ च)> सपा. तै १,२,२,१ प्रभृ., आपश्रौ १०,८,६; १६,८,१२ **विश्वे देवस्य** इति पाभे.। एकतरत्र **विश्वो रायः** (माश ३,१,४,१८; ६,६,१,२१ च)> सपा. तै १, २,२,१ प्रभृ., बौश्रौ ६,४:६ **विश्वे रायः** इति पाभे.।

d) =सपा. तैब्रा २,६,३,४; ८, ७, १०; प्रभृ.। मै ३,११, १० तैब्रा १, १, ७, २; २, १, २४ आपश्रौ ५, १६, १ **सर्वम्** इति, पागृ ३, २, २; ३, ६ **दीर्घम्** इति च पाभे.। पृ १६३८ *f* अपि द्र.।

e) सपा. शौ ३,१,४ पै ३,६,४ **विष्वक्** इति पाभे.।

f) सपा. शौ १९, ५९, २ पै १९, ४७, ५ **विश्वात्** इति पाभे.।

g) सपा. तैआ १,२३,८ **गर्भम्** इति पाभे.।

३, ५; ७;४,९; ३३, २, २१†; ३५, ३, ५; तै †१, १, १४,४; २, १,१; ४,३१, १; ५,११,३; ६,१२,१; ७, ७, १$; १३, १; २, ४, ३, २; ६, १¶; ५, ९, ६¶; ६,७, ६; ३, ३, ११, २; ४, ७, २; †४, १, ८, ५[a]; ४, ६, १[३]$; ५, १०, १; ६,१, ५; २, ३‡[b]; ७, ३, १$; १२, १;५,१,११, ४; ७, २, १[c]; मै १, २, १†; ३, १; ३९†; ११, १; २, १, ११;३, ८†;७,१६[३]; ९, ९†; १०,२†; ११,४; १२, १; १३, २३†[a]; ३, ६, २†; १०[२]¶; ११, १०[c]; †४,५,४$; ८, १०¶; ९,४;१०, २;६;११, १[२]; १२, १; २; १३, १; ९; १४, १; ५; ९$; १२; १५; १८[c]; काठ २, १†; ३, ९; ४, १६†; ८, १६†; १०, ७;१३†; १३,१४; १५†; १५, १२†; १७, १०[३]; १६†; १९†; १८, १[२]‡[b]; ८;१३†; ३१,१४; ३५, ४; ७[२]†; ९†; ३८,२[२]†[c]; ३९, १५; ४०, १†[a]; ७†; ४६,२†; क १, १३†; २, १६; २६, ९[३]; २७, ६†; २८, २[२]‡[b];८; २९,

२; ४८, ५; ९[२]†; †कौ १,२२; ३१२‡[d]; ३६१$; ४६६; २, २०३; २४१; ४२१‡[e]; ७१३; ७८०; ११५२; ३, ५, ९; १०; †जै १, ३,२; ३२,१०‡[d]; ३८, २$; ४८,६; ५६, ४; ३, १८, १०; २१,६; ३२, ११‡[e]; ५८,१०; ४,१,५; २, १; २; ६, १‡[d]; ८; ८, ६; ११, ३; १७, ९; १९.४; २९,६; शौ १, १०, २; ३१-३२, ४; २, १, १; ३, ३१, ५†; ४, २, ६†; ११,१; ३२, १†; ५, २, ८‡[f]; ११,८; ६, ४४, १; ५१, २†; ५७, ३; ७७, १; ८८, १†; ७, १, २[g]; १२,१; २१, ६; ५७,२; ८, ९, ९; ९, ३, २०; ५, २१;१२,४; १५, १९; २६†; १०, ६, १७; ७, ३५; ८, ७; १३; ११, ६, २२; ९,१; २; १३, १, १;५२; २, ३;१९†; २०†; ३१; ४४[२]; ३, १५; १४,१,२२†[e], २,६४; १८, १, १८†;५३†; ३, २४†; १९, ४७,२;५५,६; †२०,१०, २; १५, २; ६; ३०, ५; ४७, १६; १७; ५६,६; ५९, २;६५, ३;८७,६;९५,३; १०७,११‡[i];

पै १, ९, २; २२, ४; २३,४[२]; १०३,१[h]; १११, ३; २, ६,१; २८, १[२l]; ३, ६, ४; २५, १; ४०, ५; ४, १, ७†; ३२, १; †५, ३८, १; ३९, ७; ६,†३, ३; ४; २०, २; ८, १,८; १३, ११†; ९, १०, ११; २३, १८; १०, ६, ९; १२, ७, १३; १४, १, १५; १५, २०, ७†; १६, १८,९; २३,२; ४०, १०; ४८, ५; ६९, ९; ८२, १; २; १०१-१०२, २; १३९,४; १७, १,४[j]; १०, ७; २५, ५†; ७†; १८, १५, १; २०,१; ७; २२, ४†;५†; २३, ८;२५,१; १९, १०, ५; १६, १; २३, ९; ३०, १५; ३१, १; ४३, ६†; २०, १, ७; २, ७; ४, ४[k]; ३३, ६; ३६, १; ४९, ३; ४†; ५४, ३; ५६, ३; -श्वया ऋ ८, १, १९; ६८,२?[l]; कौ २,११२२†; -श्वस्मात् ऋ १, १०६ ⌊१-६⌋; १२३, २; १३४, ५; २, १७, ६; ४, २, ६; २८, ४; ८, ६०, १०; १०, ३६, ३; ८६, ⌊१-२३⌋; तै १, १, ११, १;[m] मै १, १, १२[m]; ३, ११,

a) स?ा. तैआ १.२३,८ गर्भम् इति पाभे. ।

b) सपा. मै २,१०, ३ विश्वा इति, ऋ १०, ८२, ६ विश्वानि इति च पाभे. । c) पाभे. पृ २९१४ *d* द्र. ।

d) सपा. ऋ ८,८८,५ स्वधाम् इति पाभे. ।

e) विश्वमानुषक् > सपा. ऋ ८,४५,४२ विश्वमानुषः इति पाभे. ।

f) सपा. ऋ १०, १२०, ८ विश्वा अवृणोत् इत्यस्य पाभे. सतो विकारमात्रमेतद् यदिह विश्वमर्णवत् इति पठ्यते । g) सपा. तै २, २, १२, १ पै २०, १, २ तैब्रा ३,५,७,२ विश्वाः इति पाभे. ।

h) सपा. शौ ७,८४,३ ऊर्जम् इति पाभे. ।

i) एकत्र स?ा शौ ६,७१,१ होता इति, पै २०, १४, १ विश्वात् इति च पाभे. । j) पाभे. पृ २२२८ *m* द्र. ।

k) सपा. शौ ७,२१,६ सर्वम् इति पाभे. ।

l) विश्वया मते इति द्वि-?दः। पाठः? विश्व-जास्- + पति- > बस. *विश्वजास्-पति- > ⌊सं१⌋ विश्वजास्पते इति शोधः (वैतु. पपा. अनु सा. ?GW.प्रभृ. एव पाठे सति विश्वया ⌊= विश्वया इति कुर्वन्ताविव⌋ क्रिवि. इति, ORN. *विश्वया-मति- > ⌊सं१⌋ विश्वया-मते इत्येकं पदमिति?) ।

m) =सपा. बौश्रौ १,१३:२१ । मा २,३[३] का २,१,३; ४[३] माश १, ३, ४, २ काश २, ३, २,१९-२१ विश्वस्य इति पाभे. ।

१०[b]; काठ १,११[b]; ८,१७[2]†; क १, ११[b]; कौ २,८९५†; जै ४,१४,२†; शौ ६,९६,२‡[c];७, ११७,२‡[c]; ८,७,२८‡[c]; १४, २, ४४; †२०, १२६, १-२३; पै ३, १७, ४‡[c]; †४, २८, १[d]; २[d]; ३-६; ९, २२, २८; १७, २३, ३‡[c]; १८, ११, ४; १९, ३७, १२;
–†श्वस्मिन् ऋ १०, ४९, १; ५०,४; तै ३,४,११, ४; मै ४, १२,६; काठ २३, १२;
–श्वस्मै ऋ १, ३१, २; ५५, ३;६६,३; ९२, ⌊४; ४, १४, २⌋; १२८, ६[2]; ५, ८३, ४; ६, १, १; ७, ६६, १४; ९, ४८,४; १०,८८, १२; मा १३, १९; २४; १४, १२;१४;१५,५८;६४; का १४, २, ४;१०; १५, ४, २;३; १६, ७, १; ६; तै ३, १, ९, ३; ४, २, ९, १; ३, ६, १; ४, ३,३; ६, १[3]; मै २,७,१६[3]; ८,१४[3]; †४, १२, ५; १३, ६; काठ १७, १०[3]; १८, २०†; ३५,७; ३९, ३; ४०, ३; ५; क २६, ९[3]; ४८, ९; कौ २, १९०†; जै ३,१७,१०†;
–श्वस्य ऋ १, ११, ४; २५,२०; ४४,५;४८, १०; ९२,९; १००, ७; १०१, ५; ११३, ७; १३८, १; १६४, ⌊२१; २,२७,४⌋; १६५, ६; २, १२, ९; १३, ६; ३८, २; ४०, १; ३,१४,७; ४६, ⌊२; ६,३६, ४⌋; ४, १३, ३; ५,७,६; ३२, ⌊७; ७,१०४,१६⌋; ३४,६;४२, ११; ५५, ८; ७१, २; ८५, ३; ६, १६,१३; ४२, ३; ५०, ⌊७; ७, ६०,२; १०, ६३, ८⌋; ५१, ७, ६१, ३; ७१, २; ७,११,४; १६, १; ३२, १६; १७; ६५, १; १०१,२; ८, १७, ९; २५, १; ४७,४; ६२, ७; ९,३२,३; ६६, २; ७६, ४; ८६, ५; २८; ३६;८८,४;९७,५६; १०१,५; ७; १०, ५, ३;२६, ८; ३७,५; ४५, ६;८७,१५; ९१,१;१०२, १२; १६०,२; १६१, ३;१६८, २; १९०, २; खि ३,१०,२,२; ४, २, ३; मा २, ३[3b]; ११, ३२†; १२, २३†;३७;१३,१८; ३९; †१५,२२; ३२; ३३[2]‡[e]; १७, ७८; १८, ५५; ३६, ८[f]; का २,१,३[b]; ४[2b]; १२, ३,५†; १३, २, ६†; ३, ८; १४,२,३; ४, २; †१६, ५, ३; १४; १५[2]‡[e]; १८,६,१४;२०,३,५; ३६, १, ८[f]; तै १, ८,२२,५†; २, १, ११, ४†; ३, ५,६, २; ११, ३†; ४, १, ३,२; २,२, २†; ३, ३; ५, ४; ९, १; ६†; †४,४,१; ४;७, १३, २; १५, ३; ७,५, १, ६¶; मै १, ३,२६; २,७,३†; ९;१०; १७; ८,१४;१२,३;१३,८†; २३‡[g]; ३, १२,१७‡[g]; १६, ५; †११, २; ३; १२, १†; १४, १; काठ ४, १६‡[g]; ८, १७†; ९,१८†; १९†; ११, १२†; १३, १५; १५, ५; १६,३†;९†;१०;१६; १८, १५; २२, १५†; ३९, ३; १५[2];†;४०,१‡[g];९; क २५,१; २९, ४; †कौ १, ९;४५;२७०; ३५९;४५०$; ४५६$[f]; ५४६; २, ९९; १२०; १६८; २२३; २३८; ६००; ७९२; ३,३,७$; जै †१, १, ९; ५, १; २८, ८; ३७, ८; $४७, ४; १०; ५६, २; २, २, ६; †३, १०, १; १६, ६; २०, ७; २१, ३; ४८, १६; ४, १८, ४; २७, ५; शौ २, ३१, १; ३, ७, ५‡[h]; ११, ३†; ४, २५, १; ५,२५, ७; ६,३९,३; ५८, ३; ८६, १; ९१,३‡[h]; ९५, ३; ८,३,१४†; ४, १६†; ९, १४, २२†, १५, १३‡[i]; १४‡[j]; ११,६,२३;९, १५; १६; †२०, ५, ३;३४,९; ९६, २; ८; १३७, ५; पै १, ६२, ३; १०७, २†; २, १५, १; ३, २, ७; ४, १, ३†;३४, १; ५, २,७[k]; १८,९‡[h]; २७, ३-५; ६, ३, ८; ११; ७, १८, ४†; ९, १०, ११; १२, ७,

a) सपा. ऋ १०, ९७, १६ सुर्वस्मात् इति पाभे. ।
b) पाभे. पू २९१५ *m* द्र. ।
c) सपा. ऋ १०, ९७, १६ मा १२, ९० मै ३, ११, १० आपश्रौ ७, २१, ६ लाश्रौ २, २, ११ सुर्वस्मात् इति पाभे. ।
d) °श्व° इति पाठः ? ।
e) सपा. ऋ ७,१६,२ विभे. ।
f) =सपा. आश्रौ ८,२, २१ साब्रा २,६,७ । ऐआ ५, ३,१ विश्वम् इति पाभे. ।
g) पाभे. पू १०२८ *a* द्र. ।
h) पाभे. पू २३३३ *j* द्र. ।
i) सपा. ऋ १,१६४,३४ यत्र इति पाभे. ।
j) सपा. ऋ १, १६४,३५ विभे. ।
k) सपा. शौ ४,१,७ विश्वेषाम् इति पाभे. ।

१३; १३,२,६; ७,९†; १६,७, ४†; १०, ६†; २३, ४[a]; ६७, १२†; ८३, ५; ६; १९, ६, १०; ८, ८; २०, १०, ४; २४, २; –॒श्वस्य मा ३७, १८[२]; का ३७, ३, ५[२]; मै ४, ९, ६[४]; –†श्वस्याः ऋ ८, ७१,१; १०, ६, ३; कौ १, ६; जै १, १,६; –श्वस्यास् तै ४, ७, १५, १; मै ३, १६, ५; काठ २२, १५; –श्वस्यै ऋ ८, ३९, ४; –श्वा ऋ १ ३५, ३;५; ३६, ५;४०, ६; ५१, ७; ८; ⌊१३; ८,१००, ६; १०, ३९,४⌋; ५२,११;६३, १; ६४, ३; ७२,१; ९; ७३,२; ८४, २०; ८५, ⌊८; १६६, ४⌋; ९१, १९; ९२, ३[b]; १५; ९४, ६; ९५, १०; ९६,१; ९९,१; १०१, ६; १०८, १३; १०९, ६; ११३, ⌊४-६⌋; १२८, ४; १३०, २; ६; ७; ९; १३१, १; ७; १३४, ४; १४६, १; १४९, ४;५; १५२, १; १५४, २; ४; १६४,२; १३; १४;४९; १७१, ३; १७३, ८; १७८, १; १८९, ⌊२; १०, ५६, ७⌋; २, १०, ४; १२, ४; १३,१०; ११; १७,१; ⌊४; ९, ११०, ९⌋; १८,७;२४, ११; ३४, ४; ४१,१७; ३, ३, १०; १६, ४; २०, ४; ३१,⌊८; १०,१११,५⌋;५४,८; २२;५५, १०; १९;६१,३; ६२,⌊९; १०, १८७, ४⌋; ४,१,४; ८; ३,१६; ४, ७; ६, ५; १६, ५; २२, ४; ६; २७, १; ३०, २[१c]; ३६,८; ४२, ३; ६; ७; ५०, ७;५,१६, ३; २९, १४; ३१, ३; ५७, ६; ७३,४; ७७,३;८१,२; ८२,⌊६; ८,२२,१८;१०३,५⌋; ९; ६,१, ९; ५,२; ७,६; ७;१३,१;१५, १०; १३;१६ ⌊२० (४५,२०)⌋; १७,१;१३; १९,६;२५,५;३१, २; ४६, ६; ६०, १०; ६४, १; ६९, ४; ७२, १; ७४, ३; ७५, १४; ७,३, ⌊१०; ४,१०; (६०, ६)⌋; १२, २; १६, ४; १७, ५; १८, १; १३; १४; १७; २१, ३; ⌊(४, १६, ६) ४⌋; २२,७; २५, ४; ३२, १५; ४४,३; ५५, ⌊१; ८, १५,१३; ९. २५, ४⌋, ६१, ⌊(१, १०८, १)१⌋; ५[d]; ६२,१; ⌊६; ६३,६⌋; ७८,२; ८०, १; ८२, ५; ८७, २; ९१,⌊(४,३४,९) ३⌋; ८,१, ३;२,३४;३,⌊६; १२,२८; ३०; ९,८६, ३०; १०,५६,५⌋; १२, २१; १४, ⌊६; ९,६५,९⌋; १५, १०; १९,१४[१e]; २३,१३; ३१, ३; ३५,⌊४; ५; ६⌋;४१,७; ४२, १[२];३;४३,३०; ४६, १२; ५१, ४; ५३, ४; ६१, १७; ६२,२; ७०, ६;७५,२; ७७, १०; ७८, ⌊८; ९, ४,२; ५५, १⌋; ८८,४; ९२, ६; ९३; ९३,२७; ९४,९; ९६, ६; ९७, ९; १३; ९९,३; १००, ⌊(२, २८, १)४⌋; १०३, ६; ९, १, १०; २८, २; ५; २९,४; ३६,⌊५; ६४, ६⌋; ४०, ४; ५७,२;४; ६४,८; १८;६५, २; १०; ७३, ८; ८०, ३; ८५, १२; ८६, ५; ८७, ६;८८, २; ९०, १; ६; ९४, ३; ९७, ५१; १०२, १; १०८, ११;१०९,४; ११०, ९;१११, १[२]; १०,१,१; ६, ६; २०,८[f]; २१,६; २५,६; ३१,१; ३७,९; ३९,४; ४४,१; ४५,११; ४९, ११; ५०,५; ६; ५४,५; ५६, ७; ६३, २; ⌊६५, १५; ६६, १५⌋; ८१, १; ८२, ३; ८३, ३; ८८,९; ११; १६; ९०,३[g]; ९६,८;१००,⌊(२,२९,

---

a) सपा. शौ ११,६,२४ सर्वस्य इति पाभे.।

b) सस्थ. ?इुद् > ऋध्- (ऋद्धि-) > ⌊प्र१⌋ ऋत्,द् इति शोधः। 'अह (यत्सत्यं) सुन्वते यजमानाय (उषसां भक्ताय) विश्वा (समग्रा) *ऋद् (भवति)' इति वा. (वैतु. सा. यनि. द्वि१ सद् इषम् इत्यस्य त्रिप. इति, R ⌊ZDMG ४८,६८२⌋ विश्वाम् इति शोध- पदयश्च ?)।

c) त्रिश्वाः (कृष्टयः) इति शोधः (तु. ORN.; वैतु. वें. सा. यनि. इतीव ?)।

d) *नाप. (स्तोत्र-)। (√वृष् ⌊*=√ऋष्, √ऋच्⌋ '*अर्चने'>) *वृ(ष्म>) ष्मा- > विश्वा- > ⌊प्र३⌋ –श्वाः इति शोधः। 'हे अमूरौ वृषणौ! इमाः विश्वाः वां (युवभ्यां ⌊समर्पिता भवन्ति⌋)' इति वा. (वैतु. पपा. अनु सा. यनि. एव पदमिति कृत्वा सं२ इति, ORN. MVR. विश्वाः इति शोधितं सद् इमाः इत्यस्य ⌊सना. अपि सतः⌋ त्रिप. इति ?)।

e) विश्वान् इति शोधः (तु. ⌊अंशतः⌋ सा. R ⌊ZDMG ४८,६८३⌋)। विश्वाँ इत् इति सांहितिकः पाठः।

f) विश्वेत् इति पाठः ? (*विश्वस्मिन्नित् > ) विश्वे ⌊सप्त१⌋, इत् इति शोधः (वैतु. पपा. विश्वा, इत् इति)।

g) =सपा. तैआ ३,१२,२,। कौ ३,४,५ छांउ ३,१२, ६ सर्वा इति पाभे.।

२) ९]; ११०, ९; ११३, १०; १२५,७[a]; ८; १३६,४[b]; १३७, ५; १३९, १; ३; १४२, २; १५३, ५; १६५, ५; १६९, ३; १७०, ४; १७४, ३; खि १,१, १[c]; १०,२;२,७,२‡[d]; ३,३,४; ५,४; ४, २, ७; १०,१, ३; २, ३;४; खिसा २६, १९; मा †४, ३०[२]; ३७; ५, २०†; ८, ३६; ९, २४; २५; १०, २०†; ११, २३†; †१२, ३;१३;२८; ६६; †१७, १७;२७;५८; १९, ३९‡[d]; २१, ३†; २३, ६५†; २७, ६; २३†; २९, ७; ३४†; ५१†; ३१, ३†[e]; १९;३२,५; १०; ३३, ४१†; ३४, ५८†; ३८, ५†; का †४, १०,१[२]; ८; ५, ५, ८†; ८, ११, १; १०, ५, २; ३; ११, ६, ५†; १२, २, १२†; †१३, १, ३; १४; २, ११; ५, ५; †१८, २, २; ३, ३; ५, ९; २१, ३, १०‡[d]; २३, १, ३†; २५, १०, १३†; २९, १, ६; ३, १†; ४, ४†; ३१, १, ७; २, ६†; ४,१०†; ३२, ३,१२†; ३३, २, २१†; ३५, १, ३†[e]; २, ३; ३, ७; ३८, १, ५†; †तै १, १, १४, ४; २, २, २$; ८, १[२]; १०, १; १४, ३; ३, १४, ३; ७, १०, १[२]$; ८, १४, २; २२, ५; २, २, १२, २; ५, १२,३;

५; ६,११,१;३,२,२,२$;५,६; ५.१, १$; ६,३$; ४, १, २, ५;७,३$; १०, ४; २,१,४; २, ४; ५, ४; ५‡[f]; ११, १; ५,१, ३$; ६.२,१; ६$[g]; ३, ३; ६, ५; ५, १, ३, २; ११, ३¶; ५, ४, ३$[g]; ९, ३$; ७, २,३$[h]; ७, ४, १७,१; मै १, १,८; २, २†; ३; ६[२];†; ९†; ५, १३†; ११, ४; २, ६, १२†; ७,२†; ८[२]†; १२†;९, २; १०, २†; ३‡[i]; ५†; १२, ५; ६[j]; †३, २, १[२]; ७, ८[२]; ८, ३;११, १०‡[d]; १६, २[२]$; ३; †४, १, ८$; २, ५[२]$; ६, ६¶; ९, ७; १०,१; ३; ४[२]; ६; ११,१[२]; २; ४; ५;६; १२,१$; ४[२];६[२]; $;१३,३;६; १०; १४, १;२; ३; ७$; ९$; १०; १४[४]; $[३]; १७; काठ †२, ३; ६[२]; १०; १५; ४, १५†; ६, ११†; ७, १६[२]†; १७†; १०, १२[२]†; १३[k]; ११, १२†; १३†; १३, १५†; १४, २[२]; १५, ८†; †१६, २; ८[२]; ९; १२; २०; १७, ११; १८, १†;३[२]†; १६; १७[j]; २०?; †१९, ३; ११; २०, १४†; १५; २३, १२[२]; २४, ७¶; ३१, १४[२]; ३४, १९†; ३५, ४; ३६, १०¶; ३८,२‡[d]; ४०,३†;५;४४,६†; ४६,१†;२; †क १, १५;१९[२];

२, ४; २५, ३$; २८, २; ३; $२९.४; ५[j]; ३०-३१,१; ३७, ८¶; ४८, ५$; †कौ १, ४४; ११४; २६७; ४२९; ४६०; ४६३[२]; ४६९; ५३६; ५७०; ५८१; २,१५३; २१३; २३८; २५५;३०९;३२५;३६३;३८६; ३९८; ४९९; ५९१; ६३१; ६५५; ६६९; ७७८; ८०८; ८२२; ८४६; ९३३; ९३८; ९४०[२];१०३३;१०७४;१०८३; ११०७; १११२; १११४; ११२५; ११२६; ११८०$; ३, ३, ३; ४, १२$; †जै १, ४, १०;१२, ८; २८, ५; ४२, ३; ४८, ४; ९[२]; ४९, ३;५५, ४; ५८, ५; ५९, ४; २, १, ८$;३, १, २$; ७, ११; १५, १; १९, ८; २१, ३; २०; २३,६;२४, १४; २५, ५; २७, १; ३०, ६; ३१,६; १८; ३२, ३;४८,७;५१,९;५२,३; ५४, ५; ५५, १०;५७,११; ५८, २; ४, १, १; ४,३;१०; ७, ६; ८; ११, ४; ६; १८, ८; १९, ३; २३, ५; २७, ८; शौ १, १, १; १६, ३; २९, ३†; २, १, ३†; ५; ६, ५; २८, २[k]; ३, २०, ८; ४, १, ३[k]; १३, ४†; २६, ५; ३०, ७†[a]; ८†; ३२, ३†;५, ११, ४; ५; १२, ९†; २८, ८; ६, १९, १‡[d]; २०;

a) पाभे. पृ २३५८ *k* द्र. ।

b) सपा. पै १८,२१,६ **सर्वा** इति पाभे. ।

c) खिसा १,१ **विद्यारूपम्** इति पाभे. ।

d) पाभे. पृ २३६२ *g* द्र. ।

e) पाभे. पृ २९१७ *g* द्र. ।

f) सपा. ऋ १०,१०१,५ विमे. ।

g) **वि॒श्वा अ॒हा** > सपा. मा १७, ७८ का १८,६,१४ मै २,१०,६ **विश्वाहा** इति पाभे. ।

h) सपा. माश्रौ १,६,४, २१ वाश्रौ १,५,५,७ **विश्वस्य** इति पाभे. । i) पाभे. पृ २९१५ *b* द्र. ।

j) सपा. मा २७,१६ का २९,२,६ प्रमृ. **वि॒श्वे** इति पाभे. ।

k) सपा. तै २,३,१४,६ पै १,१२,२ **वि॒श्वानि** इति पाभे. ।

३[a]; ३४,४†; ३६,२[b]; ५३,२; ८०,१†; ११०,२; १४२,१; ७, ११,१†; १८,३[c]; २७,३; ४३, २†; ६२, ७; ६५, १; ८४,४; ८५,३†; ८६, १‡[d,e]; ९२, १; ११५,२; ९,१,५; ४, १; १४, २†; ११†; १४†; १०,८,१८; ११, २, ११; ७, ९; १३, १, ११; २,९; १०[f]; ११‡[d,e]; १२; ३२; ३४; ३८; ३, ३; १४; १८; १४, १, २३‡[d,e]; २, ३०; १७,१,१६; १९,६, ३†[g]; ५३, १-३; ६; †२०, २७, ६; ३१, ३; ३४, ४; १७$; ५५, १; ५८,१; ७३,१; ७७,५; ८०, २; ८१,२; ८५, ३; ९२, २१; ९३,८; ९४, १; १०७, १३‡[h]; ११८,४; पै १, ६, १; १०, २; ११,३; ६६,२; १०९,४; २,६, ३†; ४; २४,३; ५९,६; ६१,१; ७६, ४; ५; ३, ३३, ६; ३४, ९; ४, ३२, ३; ३६, ४; ५,२, ३; १७, ५; १८, ५†; २६,५; ८, १, ४; ५; ६, ९; १४,१०†; ९, १, ६[i]; ५, ३†; २२, २५; १०, १, १२; ६, १०; १२,१, ५†; २, १-३; ६; १३, १, २;

४, १६; ७,४†; १८; ९, १२; १४, १, १८; २, १०; १५,११, ४†; १६, २४,१; ३२,५; ६६, २†; ६७, ३†; ४†; ८९, ४?[j]; १०५,१; १५१, ३; १०; १५३, ८; १७, ३२, ८[k]; १८,९, १०; १६, १†; २३,१०; २४, १; ६; ३१, ८; १९, ७,५‡[l]; ११‡[m]; २०,१; ३९,१; ४५, २‡[n]; ३†; २०, ६, १०†; ९,३; १०, १[o]; १४,९; १५,८; २२,२†; ३१, १०†; ३२, ६; ८†; ४९,४‡[p]; -श्वाः ऋ १, ३, १२; ११, १; ५४, १०; ७१,७; ८६, ⌊५; ४, ७,४; ५, २३, १⌋; ९१, २२; ९८, २; ११७, २३; १३४, ६; १३९, ⌊३; ८, ९२, २०⌋; १७९,३; २,७,३; ८, ⌊५; १०, २१, ३; १२७, १⌋; ११, १९; १३, ३; २३,५; १३; ३३, ३; ४०, ५; ३, ११, ६; १५, ४; ३१,१३; ⌊२१; १०,१२०,८⌋[q]; ४४, २, ४९, १; ४, १७,६; ७; २२, १०; ३१, १०; ३७, ⌊७; ५,१०,६⌋; ४०, ⌊(३९,१) १⌋; ५, ४,५; २५, ⌊९; ६,६१,९⌋; ३०, ५; ५५, ६; ६२,२; ७५,

२; ६, १८,५; २२,९; २५,२; ४१, ४; ५१,१६[r]; ५८,१; ६०, ६; ७, १, ७; १०; १९, १; २९, ३; ६७, ५; ७२, १; ९५, १; १०४, ११; ८, २, ३३; ६,४; ११, ⌊८; ४३, २१⌋; १३, २१; १४,१३; १६, ⌊११; ६९,१४⌋; २४,१९; २६; ३६,⌊१-६⌋; ३९, २; ४३, ⌊१८; २९⌋; ४५, ८; ४०; ४६, ७; ८४,६; ९६, ⌊७; १०, ५२, ५⌋; ९७, १०; ९९, ५; ६; १०२,९; ९, ८,७; १३, ⌊८; ६१,२८⌋; १६, ⌊६; ६२,१९⌋; २०, १; ४०, १; ४३, २; ६२, २४; ६३, २६; २८; ८६, १५; ४१; ८९, ६; १०,१८,९; २१, ३; ३५,८; ४३, १; ५१,१; २; ६७, ११; ९७, १०; १३३, ३; १५३, ५; †मा ४, २९[r]; ६, २६[२]$; ११, ४७$; १२, ५६; ८४; ११६; १५, ६१; १७, ६१; ६६$; $१८, ३३[s]; ७३; १९, ७१; २०, ८६; २३, ३५$[t]; २७, १$; ७; ३३,६६; ६७; ३४, २२; ३८, १०$; †का ४, ९, ६[r]; ६, ७, २[२]$; १२, ४, ११$; १३, ४, १२;

---

a) सपा. शौ ५, २२, २ विश्वान् इति, पै १९, १२, १२ जनान् इति च पाभे. । b) सपा. आश्रौ ८, ९, ७ शांश्रौ १०,११,९ विश्वम् इति पाभे. ।

c) सपा. तै ३,३,११,३ मै ४,१२,६ आपमं २, ११, ४ विभे. । पै २०,२,५ विश्वानि इति पाभे. ।

d) पाठः? विश्वानि अन्यः इति शोधः (तु. पाभे. छन्दश्च)।

e) सपा. ऋ १०, ५८, १८ मै ४,१२, २ पै १८,३,२ तैब्रा २,७,१२,२; ८,९,३ विश्वानि इति पाभे. ।

f) पाभे. पृ२१२६ *f* द्र. । g) पाभे. पृ २९१७ *g* द्र. ।

h) सपा. ऋ१,११५,१ त्रिभे. । i) पाभे. पृ२९१८*k* द्र. ।

j) विश्वान् इति शोधः (वैतु. BKA. विश्वादेवान् इति समस्तम् इति?। सपा. शौ ११,१,४ विद्वान् इति पाभे. ।

k) पाभे. पृ १६४८ *c* द्र. ।

l) पाभे. पृ २६२१ *h* द्र. । m) पाभे. पृ २३६२ *g* द्र. ।

n) सपा. ऋ १०,१८७,२ धन्व इति पाभे. ।

o) सपा. शौ ७,४२,१ विश्वानि इति पाभे. ।

p) सपा. ऋ २,३८,६ विभे. ।

q) पाभे. पृ २९१५ *f* द्र. । r) =सपा. माश ३,३, ३,१५ । पै २,३१,४ विश्वान् इति पाभे. ।

s) सपा. मा १८,३४ का २०, १, ४ मै २, १२, १ काठ १८, १३ सर्वाः इति पाभे. ।

t) पाभे. पृ १६१५ *k* द्र. ।

विश्व-भोज[a]– -जाः ऋ ५,४१,४.
विश्व-भोजस्[b]– -जसम् ऋ ६,४८, १३; शौ ४, ३५,३; १८,४,६; –†जसा ऋ ७,१६,२; मा १५, ३३; का १६, ५,१५; तै ४, ४, ४, ४[c]; कौ २, १००; जै ३, १०, २.
२विश्व-मनस्– -०नः ऋ ८, २३, २[d]; –नसः ऋ ८, २४, ७[e]; –नाः ऋ १०, ५५, ८[f].
विश्व-मनुस्[g]– -नुषाम् ऋ ८,४६, १७.
विश्व-महस्[h]– -हसः ऋ १०, ९३, ३; खि ५, ५, ७
†?विश्व-मानुषो[i] ऋ ८, ४५, ४२; शौ २०,४३,३.
?विश्व-मित्रा[j] शौ १८, ३,६३; ४, ५४.
विश्व-राधस्[k]– -धसः[l] शौ७,१८,२
२विश्व-रूप,पा[m]– -०प खि ७,२, १; –पः ऋ १, १६२, २; ३, ३८,४;५५, [१९; १०,१०,५]; ५६, ३; ६, ४१, ३; मा २५, २५; ३३, २२†; का २७, १२, २; ३२, २,५†; तै २, ५,१,१; ३,३, १०, २[n]; ४,१,२; ४,६, ८, १†; ६,३, ७, ४; मै २,४, १; ३, १०, ३¶; १६,१†; ४, ८, ४¶; काठ १२,१०¶; २९, ३¶; ३७, ९; ४६,४†; क ४५, ४¶; कौ २, ११९३; शौ ४,८, ३†; ९, १,५; ४, २२; १८,१, ५†; पै ४, २, ३†; ५,३२, ६; १६, २६, २; ३२,५; २०, ९, ९; ३५, २; –पम् ऋ १, १३, १०; ३५, ४; २,११,१९; ३३, १०; ३, ६२,६; १०, ६७,१०; ८५,२०; खि १,१०,३; मा ५, ३५; ११, ४०; १३, ४१; का ५, ९, १; १२, ४, ३; १४, ४, ४; तै ३, १, ११, १†; ४, १, ४, १; २, १०, १; मै २,७,४; १७; ३, १,५; ४, ९,४†; १२, १†; १३,१०†;१४,६†;९; काठ ३, १; ४, १६†; ५, ४[o]; १३, १¶; ९[n]; १६, ४; १७; १९,५; क २,८; ३०,३; कौ २,११९४; ३, १, २‡[p]; जै २, १, १‡[p]; शौ २, ३२,२[q]; ४, १४,९; ९, १, २; ११, ७-११; १२, २५; १०, ७, ८; ८, ९; ११; १३, १, ८; १४, १, ६१†; २, १२; २०, ९१, १०; पै १, ६६, २; ३, १९, ५; ११, १, ९; १५, १, २[r]; २०, ७†; १६,३२, ३; ९९, ३; ७[s]; १०१, ५; ११७, १-५; १३९, २६; १७, ७, ९; १८, ६, १०†; ८, ३; १५, ८; २०, ८, २; ३; –पस्य ऋ १०, ८, ९; –पा तै ४, ३, ११, ५; ४,१२, १[r]; मै १, ५, २[t]; ९[t]; ३, १६, ४[r]; काठ ७, १[t]; ७३[t]; २२, १४[n]; ३९,१०; क ५, १[t];

a) विप. (तु. वें. सा.; वैतु. PW. GW. GRV. प्रभृ. प्र१ < विश्व-भोजस्– इति)। 
b) विप. (सर्वपोषक- [इष्-, पृथिवी- प्रभृ.])। बस. उप. भाप. सत् < √भुज् 'अवने'। 
c) वैतु. सा. प्र१ इति। d) व्यप. (ऋषि-)। बस. उप. भाप. < √मन् '*स्तुतौ'। e) व्यप. (ऋषि-)। 
f) विप. (*सर्वमहत्- [इन्द्र-])। बस. उप. भाप. सत् (√मह् >) *महस्– > यनि. ?। 
g) विप. (*सर्वस्तोत्रार्ह- [मरुत्-])। बस. उप. भाप. सत् < √मन् '*स्तुतौ' (वैतु. वें. सा. GRV. उप. मनुष्यपर्याय इति ?)। h) विप. (देव-)। 
i) विश्वम्, [*आनु-षष्मन्– >] -षष्म [क्रिवि.] इति शोधः (तु. सपा. कौ २,४२१ जै ३,३२, ११ आनुषक्– > -षक् इति पाभे. [योऽपि < *आनु-षष्म]; वैतु. पपा. अनु [०नुष- ] > -षः इति पाठ इति कृत्वा सा. PW. प्रभृ. = सर्व-मानवः [कस.] इतीव ?)। 'यस्य अनुबद्धतया (सततं) दत्तस्य भूरः (च सतः वसुनः) विश्वं (लोकः) वदति, तद् (एव) वसु अस्मभ्यम् आभर' इति वा.। 
j) पाठः ? ०मिद्रैः इति शोधः (वैतु. पपा. प्रभृ. ०त्राः इति पदमिति ?)। विप. [*सर्वघृतवत्- (हविस्- [तु. सप्र. ऋ १०,१४,१४; वैतु. PW. प्रभृ. व्यप. सत् = तदाख्यर्षि- इति ?])] । बस. उप. भाप. सत् < √मिद् 'स्नेहे'। 
k) विप. (देव-)। बस.। l) पाभे. पृ२८१७ e द्र.। 
m) विप. (अनेकरूप- [अज-, रथ-, सवितृ- प्रभृ.]), नाप. (धेनु-), व्यप. (त्रिशिरस्- [ऋ १०, ८,९ प्रभृ.])। बस.। 
n) सपा. ०पः <> ०पम् <> मा ८, ३० का ९, ५,३ माश ४,५,२,१२ विषुरूपः इति पाभे.। 
o) पाभे. पृ १९७६ j द्र.। 
p) सपा. ऋ७,२७,३ मै ४, १४, १४ शौ १९, ५,१ तैब्रा २,८,५,८ विषुरूपम् इति पाभे.। 
q) सपा. पै ७, २,६ द्विशीर्षः इति, पै २, १४,२ द्विशीर्षा इति च पाभे.। r) सपा. ०पम् <> ०पा इति पाभे.। s) सपा. शौ ९,५,२१ विश्वं सत्यम् इति पाभे.। t) पाभे. पृ २९२७ s द्र.।

शौ ४, ३४,८; ९,५, १०; १०, १, २; १५; २४; १४, २, ३२; पै १, ९२, २; ५, ३१, ९; ६, १०, ३; २२, ९; ७, १५, १०; १६, ३६, ५; ३७, ४; ४७, २; ९७, १०; १७, ६, १०[a]; १८, १०,२; २०, ४०,५[b]; –पाः ऋ ३, १, ७; ५,८३,५; ८, १००, ११; १०, ७८,५; ८८,१०; मा २९, ५[c]; का ३१,१,५[c]; तै ३, १, ४,२; ५,१,११, २[c]; मै १, ११, ३[d]; २, १३, २२; ३,१०, ३¶; ४, २, १०; काठ ३०,८; ९; ४०, १२; शौ २, ३४, ४; ३,१०,६; २८,१; ४,१५,२;३; ३५,६; ५,२३, ५; ९,१२,२६; पै १,१०५,२; ३,३२,६; ५, ७, २; ७,२,५; ८,१५,२[e]; १०,४, ६; १९, २२,१४;२९, ५; ५१, ६‡[f]; १७; ५७, ५; –पाणाम् शौ २, ३०, ४; पै २, १७, ४; –पाणि पै १६, १०३,६; –पान् शौ १३, १,२२; पै १७,४,१०; १८, १७, २; –पाम् ऋ १, १६१, ६; ४, ३३, ८; खि ४, ५, २[g]; ५, ५, ६; शौ ६, ५९, ३; १०, १, १; १२, १, ११; पै १, ९२, १; ५, ३१, ३; ७, ११, ८; ११, ५, २; १६,३५, १; २; १७, २, २; १९, १४, १२; –पाय पै १७, २१, ८; –पे[h] मा ९, १९; का १०, ३, १२; काठ १४, १; –०पे तै ४, २, ५,२[i]; –पेभिः ऋ १०,७०, २; काठ ३७, ९; –पेभ्यः मा १६, २५; का १७,३,४; तै ४, ५,४,१; मै २,९, ४; काठ १७, १३; क २७,३; –पैः मै ४,१४, ९; शौ १७, १, ६-१९; २४; पै १८, ३१, १-८; ३२, १-३.

विश्वं-लोप[j]– -०प तै ३,३,८,२.

विश्वं-वयस्[k]– -याः पै ३,८,२.

विश्व-वार, रा[l]– -†०र ऋ १,३०, १०; ७, ५, ८; १६,५; ९२,१; ८, ४६, ९; ९, ९१, ५; मा ७, ७; का ७, ३, १; तै १, ४, ४, १; ३, ४, २, १; मै १, ३, ६; २,१३,८; काठ ४,२; १३,११; क ३,२; कौ १,६१; जै १,६, ७; ४,२९, ५; –रः ऋ ३,१७, १; ७, ९७, ४; ९,८८,३; १०, १४९,४; मा २७,१३; का २९, २, ३; तै ४, १, ८, १; मै २, १२, ६; काठ १७, १८†; १८, १७; क २९, ५; शौ ५,२७,३; पै ९, १,२; –रम् ऋ १,४८, १३; ५, ४,७; ६,३७, १; ४९, ४[m]; ७,७, ५; १०, ४; ८४,४; ८, ७१, ३; १०, १५०, ३; मा ३३,५५†[m];का ३५,५,११†[m]; मै ४, १०, ६†[m]; १४, ९; शौ ७,४९, १; पै २०, ४, ५; –रस्य ऋ ३, ३६,१०; ५, ४४, ११; ६, २३, १०; –रा ऋ ३, ४, ३; ५, २८, १[n]; ८०, ३; खि ३, २२, ७; मा ७, १४[o]; का ७, ६, ३[o]; ७, ४[o]; मै २, १३, १०; पै ५, २७, ३; –०रा ऋ ७, ७०, १; –राः ऋ १, १२३,१२; ७, ९१,६; ९, ९७, २६; मै ३, १६, २[c]; काठ ४६, २[c]; पै १५, २२,७; –राणि ऋ

a) पाभे. पृ २०९४ *b* द्र. ।

b) सपा. पै १९,२८,१० सुप्रतीका इति पाभे. ।

c) सपा. विश्वरूपाः<>विश्ववाराः इति पाभे. ।

d) पाभे. पृ २००७ *g* द्र. । e) बहु. < वैश्वरूप- ।

f) सश. ऋ १०,१६९,२ विरूपाः इति पाभे. ।

g) सपा. खिसा २९,२ विषुरूपाम् इति पाभे. ।

h) =सपा. माश ५,१,५,२६ । तै १,७,८,३ मै १,११, ३ गौपि २,५,१५ विश्वशम्भू इति पाभे. ।

i) पाभे. पृ १४७४ *m* द्र. । सप्र. पै १९, ५,१३; ११,५ विश्ववारे इति, शौ ६, ८४, ३ अनेहा त्वम् इति च पाभे. ।

j) विप. (*विश्वप्रकाश- ⌊अग्नि-⌋) । पाठः ? °लोष्म- इति शोधः । बस. उप. = (√*लुष् ⌊=√रुश्, √रुष्, √लोक्⌋ 'दीप्तौ' > भावे) *लोष्म- इति (तु. सपा. माश्रौ २,५,५,१९ ?विश्लोक- ⌊=*विश्व-लोक-⌋ इति पाभे.) । सस्थ. ? विश्वदावस्य त्वाऽऽसन् > विश्व-दाव- > -०दाव, अस्य तवाऽऽसन् इत्यपि शोधः द्र. ⌊तु. पृ २९२६ *x*⌋ । वैप २, ३खं. गोब्रा २, ४, ८ यनि. एत्र शोधः । वैप ४ पृ २२६६ *k* अप्युक्तः शोधः द्र. ।

k) बस. । पाभे. पृ २९३१ *c* द्र. ।

l) विप. (विश्वतोवारयुक्त- ⌊इन्द्र-, अग्नि-, उषस्-, प्रभृ.⌋), व्यप. ⌊तु. *n*⌋ । बस. उप. दीप्त्यादौ बप्रा. ।

m) सपा. तैब्रा २,८,१,२ विश्ववाराम् इति पाभे. ।

n) व्यप. (प्रकृतमन्त्रद्रष्ट्री-) । 'उषसं प्रत्यग् (अभि) अग्निः विभाति । तदा घृताची सतीयमृषिका देवान् ईडाना (ईडितुं) प्राची एति' इति वा. (वैतु. वें. सा. उषसः व्यप. इतीव, PW. GW. प्रभृ. च उषसः विप. इति ?) ।

o) पाभे. पृ २९३० *c* द्र. ।

६, ५, १; –राभिः ऋ ६, २२, ११; शौ २०,३६, ११†; –राम् तै २,५,९,६[a]; काठ १३, १६[b]; शौ ७, १६,१[c]; –रायाः शौ ९, ३, १; पै १६, ३९, १; –रे ऋ ७, ७, ३; –॰रे ऋ १, ११३, १९; ३, ६१, १; ७, ७७, ५; तै ३, ५, १, १[d]; शौ ७, २१, ४[d]; ८४,१[d]; ९, ३,२;४; १२, ३, ११; पै ७, ११, ८; १६, ३९, २; ५; १७, ३७,१; १९, ५,१३[e];११,५[e]; २०,३२,१[d].

विश्व-वार्य[f]– -र्यः ऋ ८, १९,११; –र्यम् ऋ ८, २२, १२.

विश्व-वेदस्[g]– -॰दः मै २, १३, १०[h]; पै १८, १६, ५[i]; –दसः ऋ १,६४,८;१०;३,२६, ४; ५, ६७,३; ८,२७,४; १०,६६, १; ५; मा ९, ८[j]; का १०, २, ५[j]; शौ ३,३,१[j]; ६, ९२, १[j]; १९, २७, ६; पै १०, ७, ६; –॰दसः ऋ ५,६०,७; ८,१८,११; २७, २; ४; ११;⌊(७,६६,४) १९-२१⌋; ४७, ३; १०, ९३, ७; शौ ६, ९३, ३; पै १९,१४,१५; –‡दसम् ऋ १,१२,⌊१;३६, ३; ४४, ७⌋; १२८, ८; १४३, ४; ४,८,१; मा ३,३८$; का ३,४, २$; मै २, १३, ५; ४, १०, २; काठ १२, १५; २०, १४; कौ १,३; १२; ३५७‡[k]; २, १४०; जै १,१,३; २, २; ३७, ६‡[k]; ३, १४, १; ४, १९, ५; शौ २०,१०१,१; –दसा ऋ ८, २५,३; –॒दसा ऋ १०, १४३, ६; –॰दसा ऋ १,४७,४;१३९, ३; –दसे[l] शौ १, ३२,४; पै १, २३, ४; –दसौ पै १६,५२,१; –दाः ऋ १,८९,६;९१,२;१४७, ⌊३; ४,४,१३⌋; ३,२०,४; २५, १; ६, ४७, ⌊(४,१,२०) १२; १०, १३१, ६⌋; ८, ४२, १[m]; मा ५, ३१; ७, ४५; १०, ९; २०,५१†; २५, १९†; २७, १२[n]; का ५, ८, १; ५[o]; ९, २, ५; ११,४,६; २२,५,५†; २७, ११, ६†; २९, २,२[n]; तै १,२, १४,५†; ३,३,१; ४,४३,२; ७, १३,४†; ८,१२,२; ४,१,८,१[n]; ३,११,४[h]; ६,६,१,२[२]; मै १,२, १२[२]; ३,३७; २,६,९; १२,६[n]; ४,८,२[२]; ¶; ९,२७†; ११,५†; १२, २[p]; ३‡[q]; ५†; १४, १†; १३[२r]; काठ २, ६†[m]; १३; ४, ९;६,११†; ८,१६†; १०,१२[p]; १५,७; १८, १७[n]; २८,४[२]; ¶; ३५, १†; ३९, १०[h]; क १, १९†[m]; २,७; ३, ७; २९, ५[n]; ४४, ४[२]; ¶; कौ २, १२२५†; शौ ७,९६, १†; २०, १२५,६†; पै ९,१,२[n].

विश्व-व्यचस्[s]– -चसम् ऋ ३,४६, ४; मै २, ७, १६[२]; काठ ३९, ३[२]; –चसे मै १,३,३५; ३,१२, १२; काठ ४०,४; –चाः मा ५, ३३[t]; १३, ५६[u]; १५, १७[u]; १८,४१; का ५,८,३;१४,७,५[u]; १६,४,५; २०,२, ४; तै १, १, ३,१[v]; ३,४,७,१; ४,३,२, २[u];

a) =सपा. माश १,५,२,३[२] तैब्रा ३,५,४,१ शांश्रौ १, ६,१६। आश्रौ १,४,११ **विश्ववारे** इति पाभे.।

b) पाभे. पृ २३८६ *i* द्र.।

c) पाभे. पृ २९३१ *k* द्र.।

d) सपा. माश्रौ ६,२,३,८ **सर्ववीरे** इति पाभे.।

e) पाभे. पृ २९३८ *i* द्र.।

f) विप. (अग्नि-, हव-)। बस.।

g) विप. (सर्वधन- वा सर्वप्रज्ञ- वा ⌊अग्नि-, पूषन्- प्रभृ.⌋)। बस.।

h) सपा. **विश्ववेदः<>विश्ववेदाः** इति पाभे.।

i) सपा. शौ १३,१,१५ **जातवेदः** इति पाभे.।

j) पाभे. पृ १६१५ *o* द्र.।

k) पाभे. पृ २९३१ *e* द्र.।

l) सपा. तैब्रा ३,७, १०, ३ आपश्रौ ९, १४,२ **विश्वकर्मणे** इति पाभे.।

m) =सपा. ऐब्रा १, ३० शांब्रा ९, ६ गोब्रा २,४,१५ आश्रौ ३,७,१५; ४,१०,५। ऋ ३,३०,९ मा ४,३० का ४,१०,१ तै १,२,८,१ मै १,२,६; ३,७,८ माश ३,३,४, २ **अन्तरिक्षम्** इति पाभे.।

n) पाभे. पृ २३७० *i* द्र.।

o) =सपा. काश्रौ ८,६,२२। शांश्रौ ६,१२,१० आपश्रौ ११,१४,१० **विश्वभराः** इति पाभे.।

p) =सपा. आश्रौ २,११,१२ शांश्रौ ३, ६,२। तै २, १,११,३ विभे.।

q) सपा. ऋ १०,८३,२ **जातवेदाः** इति पाभे.।

r) पाभे. पृ २९२९ *n* द्र.।

s) विप. (विश्वव्याप्त- ⌊इन्द्र-, प्रजापति- प्रभृ.⌋)। बस.।

t) सपा. आपश्रौ ११,१५,१ **विश्वभराः** इति पाभे.।

u) नाप. (आदित्य-)।

v) पाभे. पृ २९२७ *h* द्र.।

४,३,१[a]; १२,५[b]; ५, २, १०, ४¶[a]; मै १,२,१२; २,७,१९[a]; १२,२; ४,१२, १; काठ १, ३; २,१३; ८.१७; १६,१९[a]; १८, १४; २०, ९[a]; २२,१४[b]; ३१, २[२];¶; क १,३; २,७; २५,९[a]; २९.३;३१,११; ४७,७[२];¶; शौ ९,१२,१५; १२, ३, १९; ५३; १९,४९, १?[c]; पै १५, २, ३[b]; १६, १३९, १८; १७, ३७, ९; ४१,३.

वैश्वव्यचस्[d]– -सम् मा १३,५६; का १४,७,५; तै ४, ३, २, २; मै २, ७, १९; काठ १६,१९; क २५,९.

विश्व-शंभू[e]– -भुः?[f] पै ४, १८, ७; –भुवः तै ६,१,२,३¶; मै ४,१०, ४‡[g]; पै १९,३०,२; ३३, १५; –०भुवः मा ४, ७; का ४,३,१; तै १, २, २, १; ६, १, २, २; ३; मै १, २, २; ३, ६,४; काठ २, २; २३, २; क १,१४; ३५, ८; –†भुवम् ऋ १, २३[,२०; १०,९,६]; काठ २, १४; शौ १, ६, २; –भुवा ऋ १, १६०, १; ४; ६, ७०, ६; –भुवौ मा १०, ९[h]; –भू का ११,४,६[h]; तै १, ७,८,३[i]; मै १,११,३[i]; –†भूः ऋ १०, ८१, ७; मा ८, ४५; १७, २३; का ८, १९, १; १८, २, ७; तै ३, १, ९, १‡[j]; ४, ६, २, ६†; मै १, ३, ३६‡[j]; २, १०, २; काठ १८, २; २१, १३; ३०, ५; ६‡[j]; क २८,२; शौ ६, ४७, १‡[j].

विश्व-शर्धस्[k]– -र्धसौ ऋ ५,३४,८.

विश्व-शारद[l]– -दम् शौ ९, १३, ६[m]; १९, ३४, १०; पै १,३२, ५; ११, ३, १०.

विश्व-श्-चन्द्र, न्द्रा[n]– -न्द्रम् ऋ ९,९३,५; –†न्द्राः ऋ १,१६५, ८; ३, ३१, १६; ८, ८१, ९; १०, १३४, ३; मै ४, ११, ३; काठ ९, १८; जै ३, ३३,१७.

विश्व-श्रुष्टि[o]– -ष्टिः ऋ १,१२८,१.

विश्व-सामन्– -०मन्[p] ऋ ५,२२, १; –मा[q] मा १८,३९; का २०, २,२; तै ३,४,७,१; मै २, १२, २; काठ १८, १४; क २९,३.

†विश्व-सौभग[r]– -०ग ऋ १, ४२, ६; –गः ऋ १,१५७,३; कौ २, १११०.

†विश्व-ह[s] ऋ २,१२,[१५; ८,४८, १४];७,२१,९; शौ २०,३४,१८.

---

a) नाप. (आदित्य-)।

b) सपा. मै ३,१६,४ आश्रौ ४, १२,२ वाश्रौ २,१,१, २० व्युचस्वती इति पाभे.।

c) तु. RW.। शंपा. सात. अश्वक्षभा इति पाभे.।

d) विप. (चक्षुस्-)। तस्येदमीयः अण् प्र.।

e) विप. (अग्नि-, २अप्- प्रभृ.)। बस. उप. दीप्ति-शान्त्याद्यर्थेषु भाप. सत् <√ *शम्भ् [बधा. (वैतु. =शम् [अव्य.] + √भू इति प्रायोवादः ?)]।

f) पाठः ? *°शम्भुस्–>[न. प्र१] °म्भुः इति शोधः (तु. *°म्भुस् सत्यम् > °म्भू स° इतीत्र मूको. ?)।

g) पाभे. पृ २३३३ *j* द्र.।

h) पाभे. पृ १००१ *c* द्र.।

i) पाभे. पृ २९३८ *h* द्र.।

j) पाभे. पृ २९३० *j* द्र.।

k) विप. (व्याप्तबल- [जन-])। बस.।

l) विप. (*सर्वदेहसंतपन- [तक्मन्- =ज्वर-])। बस. उप. =(√शॄ [=√श्रा, √श्रै] 'पाके =*तापे' > भावे) शार्–+ (√दा [=√धा] 'पोषणे' > कर्तरि) द–> उस. शार-द– इति (वैतु. सा. उप. √शॄ 'विशरणे' इति, PW. W. प्रभृ. उप. = शरद्–[=वर्ष-] इति च ?)।

m) पाभे. पृ २६८५ *g* द्र.।

n) विप. (*बहुप्रकाश- [२अप्-, रयि-, वाज- प्रभृ.])। बस. अत्रयवौ प्रति विवादः। पूप. =विश्व–> विश्व– इति प्रागत्राक्-समं मतम्। उप. =चन्द्र– > (स >) श + चन्द्र–> श्चन्द्र– इति पा (६,१,१५१), = *श्चन्द्र– (चन्द्र–) इति त्वत्राद्यः। (बह्वर्थे √भ्रश् > *भ्रश्मस्– >) *विश्वस्– इति पूप., चन्द्र– [दीप्त्यर्थे भाप.] इति च उप. इति मतम् (तु. टि. सुश्चन्द्र–, हरिश्चन्द्र–)।

o) विप. (सर्वसुखकर- [अग्नि-])।

p) व्यप. (ऋषि-)। बस.।

q) विप. (सर्वतो *दीप्तिमत्-)। बस. उप. भाप. सत् <(√स्वृ 'उपतापे'>) *स्वर्मन्– (वैतु. माश [९,४, १,८], उ. म [पक्षे] प्रभृ. कस. उप. गीतिपर्याय इतीव ?)।

r) विप. (सर्वसौभाग्ययुक्त- [पूषन्-, अश्विरथ-])। बस.।

s) अव्य. (सर्वदा-)। *विश्वद्– (= १विश्व-) + *वृध्– (काल-) > कस. *विश्वद्-वृध्– > (तृ१) *विश्व-वृधा > *विश्वाधा > विश्वधा, °ध इत्येकम्, °था, °थ इत्येकम्, विश्वाहा, °ह इत्येकम्, °श्वहा, °ह इत्येकमित्येवं समूला सती प्रस्थानचतुष्टयी (तु. पपा. नावग्रहः; वैतु. पाप्र. विश्व–+ थल्, थाल्, धल्, धाल्, हल्, हाल् प्र. द्र.

†विश्व-हा[a] ऋ १, १११, ३; १६०, ५; २, २४, १५; ३२, ३; ३५, १४; ४, ३१, १२; ६, १, ३; ४७, १५; ८, ४३, २६; ४४, २२; १०, ७८, ६; ८८, १४; ९१, ६; १००, ४; मै ४, १२,१;१३,६; १४, १०; काठ १८, २०; ३८, १२; ३९, १५; कौ २, ११७४; शौ ५, २७, ७; ९, २, १९-२४; १२, १, १७; २७; १९, ५०, २; पै ६, २२, ६[b]; १०, १, १२; १४, ४, १२; १६, ७७, ८; ७८, १-६; १७, २,८; ३, ८.

विश्व-होतृ[c]– -तुः मै १, १,३.

?विश्वाची[d] ऋ ७, ४३, ३; मा १५, १८[e]; का १६, ४,७[e]; तै ४,४,३, २[e]; मै २,८, १०[e]; काठ १७,९[e]; १८,३‡[f]; क २६, ८[e]; २८, ३‡[f].

?†विश्वाचीः[g] ऋ १०,१३९, २[h]; मा १७,५९; का १८,५, १०; तै ४, ६, ३, ३; मै २,१०, ५; पै १६, १०३, ७.

?†विश्वाच्या[i] ऋ ९, १०१, ३; कौ २,४९; जै ३, ५, ८.

†विश्वानर[j]– -रः ऋ १,१८६, १; ७, ७६, १; मा ३३, ३४; का ३२, ३, ५; पै १७, २७,४; –रस्य ऋ ८, ६८, ४; कौ १, ३६४; जै १, ६८, ३; –राय ऋ १०, ५०, १; मा ३३, २३; का ३२,२,६; –$रे शौ ४,११, ७; पै १७, २९, ३.

†विश्वा(श्व-अ)प्सु[k]– -प्सुम् ऋ १, १४८, १; मै ४.१४, १५.

विश्वा-मित्र[l]– -०त्र शौ १८, ३, १६; –त्रः ऋ ३, ५३, ९; मा १३, ५७[m]; का १४,७, ८[m]; तै ४, ३, २, २[m]; ¶५, २, ३, ४; १०, ५; ४, २, २; मै २, ७, १९[m]; ४,५, ४¶; ८, ४¶; काठ १६, १९[m]; ¶२०, १; ९; क २५, ९[m]; ¶३१, ३; ११; शौ १८, ३,१५; पै २,२८,४[n]; ५, २८, ४; ११, ५, १३; १४, ३, २३; –त्रम् शौ ४, २९, ५; पै ४, ३८, ४; –त्रस्य ऋ ३, ५३,१२; तै ५,२, ३, ३¶; काठ २०,१¶; क ३१, ३¶; –त्राः[o] ऋ ३,५३,१३; १०, ८९, ⌊(६, २५, ९) १७⌋; –त्राय ऋ ३, ५३,७; –त्रेभिः[o] ऋ ३,१,२१; –त्रेषु[o] ऋ ३, १८, ४.

विश्वामित्र-जमदग्नि– -०ग्नी ऋ १०,१६७,४; –¶ग्नी तै ३, १,७, ३; ५, ४, ११, ३.

---

इतीव ⌊तु. WAG ⌊१,२१७ *a*⌋ MVG ⌊५८,२ *a*⌋, WAG ⌊१.२१८⌋ MVR ⌊पृ ३९⌋ विश्वाहा ([<विश्वा+अहा ⌊<अहन्-⌋] इति च)।

a) =विश्व-ह (तु. तत्रत्यं टि.)।

b) पाभे. पृ २९३२ *h* द्र.। c) विप.। बस.।

d) पाठः? २विश्व–+अर्चिस् (दीप्ति-) > बस. *विश्वाऽर्चिस्–> (प्र१) ०र्चीः (विप. ⌊अग्नि-⌋) इति शोधः (वैतु. पपा. अनु यनि. पदं साधूकृत्य विश्वाची– इति प्राति. सत् नाप. विप. चेति वें. सा. PW. प्रभृ. ?)।

e) व्यप. (अप्सरस्-)।

f) सपा. विश्वाची<>विश्वाचीः इति पाभे. (तु. *h*)।

g) सस्थ. घृताचीः इत्यपि *घृतार्चिस्–>प्र१ सत् सवितुः विप. द्र.। यच्चात्र विषये पृ १२८० निर्दिष्टचरं तदंशतः शोध्यं द्र.। शेषं *d* द्र.।

h) वैतु. ०ची– इति प्राति. इति कृत्वा दिगाद्यर्थे नाप. इति वें. सा. उ. म. PW. प्रभृ. च ?। =सपा. माश ९,२,३,१७। काठ १८,३ ०ची इति पाभे. ⌊तत्रापि ०चीः इत्येवं सुशोधः⌋।

i) पाठः? २विश्व–+(√अर्च् 'स्तुतौ'>) अर्चिस्– (*स्तुति-)>बस. *विश्वार्चिस्– (विप. ⌊धी- =स्तोत्र-⌋) >⌊तृ१⌋ *०र्चिषा इति शोधः (तु. छन्दः)। शेषं *d* द्र.।

j) विप. (*ओजस्वत्- ⌊इन्द्र-, सवितृ-, शवस्- ⌊बल-⌋), व्यप. (अन्तरिक्ष्य-देव- ⌊निघ ५, ५; ६⌋)। (√*विश् ⌊=√भृज, *भ्रू दीप्तौ'>भावे *विश्वन्त–>) *विश्वान्–+(√भृ 'धारणे'>भावे) भर–>बस. *विश्वान्-भर–>यनि. (तु. पपा. नावग्रहः; वैतु. <१विश्व–+नर– इति प्रायोवादः?)। तु. वैश्वानर–।

k) विप. (विश्वरूप- ⌊अग्नि-⌋)। बस. (तु. विश्वप्सु- इति)। GW. प्रभृ. वि(श्व>)श्वा-प्सु– इति।

l) व्यप. (ऋषि-)। *विश्वर्– (बहु-)+(√*मित् ⌊=√वृत्,धृ⌋ 'स्तुतौ'>) मित्र– (*स्तोत्र-)> बस. *विश्वर्-मित्र–>यनि. (वैतु. पा ⌊६, ३,१३०⌋ प्रभृ. =१विश्व–+मित्र– ⌊सुहृद्-⌋>बस. इति ?)।

m) सपा. तै ४,३,२,२ जमदग्निः इति पाभे.।

n) –त्र इति पाठः? यनि. शोधः (तु. पै ५,२८,४)।

o) बहु.<वैश्वामित्र– (पा ४,१,११४)। तद्धितस्य प्र. लुक् उसं. (पा २,४,६५)।

?विश्वायवे[a] ऋ १०, २२, १४.

†विश्वा(श्व-आ)यु[b]- -यु ऋ १, ५७,१[c]; ४,२८,⌊२?[d]; ६, २०, ५?[d]⌋; ५,५३,१३[e];७,३४,११[f]; शौ २०, १५, १; -युः ऋ १, ९, ७[g]; २७,३; ६७, ३;५;६८, ३; ७३,४; ३, ३१,१८; ६, ४, २; १७, ९; ३३,४;३४, ५; ८, २,४; ९,८६,४१; १०,६, ३;७, १; १७,४; १०४, ९; ११४,१; मा १, ४; २२; १८, ५४; ३८, २०; का १, २, ४; ८, २; २०, ३, ४; ३८, ५, ३; तै १, १,३, १;८,१;२,१२, ३; २, ४,३,२; ४, ३, १३, २; ४, ७, २[h]; ७, १३, २[i]; मै १, १, ३; ९; २, ८; २, १,११; १२, ३; ३, ८, ५; ४, १, ३[२]¶; ९; ९, १०; १४, १५; काठ १, ३; ८; २, ९; १०, ७; १८, १५; ३१,२[२]; ७; ३९, १; क १, ३; ८; २, ३; २९, ४; ४७, २[२]; ¶; कौ २, ९८६; जै ४, १६, ५; २४, ७; शौ १८, २, ५५; २०, ७१, १३; पै २, ६९, ३; १५, ६,७; -युम् ऋ १, १२८, ८; १२९, ४; ९, ४, १०; कौ २, ४०६; जै ३, ३१, २६; -योः ऋ ४, ४२, १.

†विश्वायु-पोषस्[j]- -षसम् ऋ १, ७९, ⌊९; ६, ५९,९⌋; मै ४, १०, ६; काठ २, १४; कौ २, ८७६.

विश्वायु-वेपस्[k]- -पसम् ऋ ८, ४३, २५.

२वि(श्व>)श्वा-वसु[l]- -सुः ऋ १०, १३९,५; मा २,३; का २, १, ३; तै १, १, ११, १; २,९, १; ¶६, १, ६, ५; ११, ५; मै १, १, १२; १३; ¶३, ७, ३; ८; काठ १, ११; २४, १¶; क १, ११; ३७,२¶; -सुम् ऋ १०, ८५,२१; १३९, ४; मै ४, ९, ११†; शौ २, २, ४; पै १, ७, ४; १८, १०, ३†; -०सो

[a]) (√वृष् '*जन्मनि' > *वृष्वु- ⌊नाप. = वृद्धि-मन्मात्र-⌋ > २विश्वु- > *विश्वस्य >) विश्वाय + आयवे (जीवनाय) > *विश्वायाऽऽयवे इति द्वि-पदः शोधः। 'यत् (यदा) क्षाः (पृथिवी) अहस्ता (च) अपदी (चापि सती) वेद्यानां (*देवानां) शचीभिः (शक्तिभिः) वर्धत (प्रासूत ⌊हे इन्द्र! तदा त्वं⌋) प्रदक्षिणित् (*प्रतक्षणकरः ⌊सन्⌋) *विश्वाय आयवे शुष्णं परिनिशिश्नथः (हतवान्)' इति वा।

[b]) विप. (*विश्ववर्धक- ⌊अग्नि- प्रभृ.⌋)। बस. उप. भाप. सत् बप्रा. द्र.। यत्तु भा. सा. उ. म. प्रभृ. मा १,४; २२ प्रभृ. आयुस्- इति उप. इति तन्न (तु. PW. प्रभृ., *c* च)।

[c]) विप. [*अतिहिंसाकृत्- (राधस्- ⌊<√राध् =√रध्,न्ध् 'हिंसायाम्'⌋ *= आक्रमण-)]। बस. उप. (√वृध् 'छेदने'>भावे) *वृधु-। 'यस्य (इन्द्रस्य) शवसे (पराक्रमाय) अपाऽऽवृतं विश्वायु राधः दुर्धरम्' इति वा.।

[d]) विप. (*अतिहिंसाकृत्- ⌊इन्द्र-⌋)। °युः ⌊प्र१⌋ इति शोधः। शेषं *c* द्र.। सस्थ. ?महो>मृधम् (आक्रमणम्) उ इति द्वि-पदः शोधः।

[e]) विप. [*अतिवृद्धिकृत्-(राधस्- ⌊<√राध् 'संसिद्धौ'⌋ = समृद्धि-)]। उप. <(√वृध् 'वृद्धौ' >) *वृधु-। शेषं *c* द्र.।

[f]) विप. (*सर्वाभिभु- ⌊*एकक्षत्र-⌋)। उप. <(√वृध् *प्रभुत्वे'>) *वृधु-। सस्थ. ?राष्ट्राणाम्> *राष्ट्रभृत्- > -भृतान् इति शोधः (वैतु. पपा. प्रभृ. °नाम् इत्येव पठन्तः?)। सस्थ. ?अस्मै क्षत्रम् > अस्यै (स्य-ए)क-क्षत्रम् (*एकच्छत्रम्) इति च। एक- (एकमात्र-) + क्षत्र- (बल-) > कस.।

[g]) तु. वें. PW. GW. प्रभृ.; वैतु. स्क. सा. उप. आयुस्- इति।

[h]) विप (अग्नि-)। बस.। पाठः? विश्वायुर् आयुर् इति शोधः (वैतु. यनि. एव शुद्धमिति कृत्वा पूर्णाऽऽयुष्याऽर्थे कस. इतीव सा. भा. PW. K. प्रभृ.?)। सस्थ. ?सर्वायुर् > सर्वायुर् आयुर् इति शोधः। 'हे अग्ने! (त्वं) विश्वायुः, सर्वायुः (सन्) मे (मम) आयुः पाहि' इति वा.। सस्थ. ?तौ > तद् उ इति द्वि-पदः शोधः। 'यत् (यतः) ते परं हृद् (*अतीव प्रेमार्द्रः इति) नाम (भवति), तत् (ततः) उ (एव) एहि संरभावहै' इति वा.।

[i]) विप. ⌊तु. *b*⌋। सस्थ. ?नमस्पथे > नमसस (पूजायाः) पदे (स्थाने ⌊यज्ञगृहे⌋) इति शोधः।

[j]) विप. (रयि-)। बस. उप. भाप. (वैतु. वें. स्क. सा. उस. पूप. विश्वायुस्- इति, उप. च कृद्-वृत्तमिति)।

[k]) विप. (अग्नि-)। बस. उप. भाप. <√विप्।

[l]) व्यप. (गन्धर्व-)। बस.।

ऋ १०, ८५, २२; शौ १४, २, ३३†; पै २, २३, ४; १८,१०, ५; २०,१४,४; –०सो शौ १४, २,३५; –सोः पै १९, ४४,३.

त्रि(श्व>)श्वा-ह[a] मै २, ९, ९[b]; काठ १७,१६; क २७,६.

विश्वाह-भेष(ज>)जी[c]– -जी[b] तै ४,५,१०, १.

वि(श्व>)श्वा-हा[a] ऋ १,२५, १२; ९०,२;१००, ⌊१९; १०२,११⌋; १६०,३; ३,१६,२; ४,४२,१०; ६,४७,१९;७५,८;१७; ७, ९८, १; १०, १८, १२; ३७,२[2]; ७; ५३, ११; मा ७,१०†; ८, ५; १६,४९[b];१७,४८†;७८[d]; २९, ४५; का ७,४,२†; ८,२,१;१७, ८,३[d]; १८,४,१६†; ६, १४[d]; †तै ४,६, ४,५[e]; ६, ३; मै २, १०,६[d]; ४,१२,४†; काठ १२, १४; २३, ११; ३८, १४; ३९, ३[d]; ४६, १; कौ २, १२१६†; शौ ३, १५, ८; ७,५२,१; ७८, ४; १८, ३, ५१†; ४,३४; २०, ८७, १; पै १५,१०, ८†; १७, २५,५[2]†; १९, ९,८.

विश्वौ(श्व-ओ)जस्[f]– -जाः ऋ १०,५५,८; मै २,६, १२; काठ १५, ८.

विश्वक– १विश्व– द्र.

विश्वकर्म– प्रभृ. २विश्व– द्र.

विश्वकृत्– १विश्व– द्र.

विश्वकृष्टि– प्रभृ. २विश्व– द्र.

?विश्वं गोरूपम् ?विश्वं° द्र.

विश्वपति–, १विश्वमनस्– प्रभृ. १विश्व– द्र.

२विश्वमनस्– प्रभृ. २विश्व– द्र.

१विश्वरूप– प्रभृ. १विश्व– द्र.

२विश्वरूप– प्रभृ. २विश्व– द्र.

वि √श्वस् > वि-श्वस[g]– -सः पै २०, ५४, १.

विश्व-सामन्– २विश्व– द्र.

विश्वसुविद्– प्रभृ. १विश्व– द्र.

विश्वसौभग– प्रभृ. २विश्व– द्र.

विश्वाङ्ग– प्रभृ. १विश्व– द्र.

?विश्वाची प्रभृ. २विश्व– द्र.

विश्वाद्– १विश्व– द्र.

विश्वानर– २विश्व– द्र.

विश्वान्न– प्रभृ. १विश्व– द्र.

विश्वाप्सु– २विश्व– द्र.

?विश्वामरुद्भिः प्रभृ. १विश्व– द्र.

विश्वामित्र– प्रभृ. २विश्व– द्र.

१विश्वावसु– प्रभृ. १विश्व– द्र.

२विश्वावसु– प्रभृ. २विश्व– द्र.

विश्वाविद्–, °श्वाषा⌊सा-⌋ह्– १विश्व– द्र.

विश्वाह, °हा प्रभृ. २विश्व– द्र.

वि √श्वि > वि-श्वयत्– -यत् ऋ ७,५०, १.

वि √श्वित् (दीप्तौ), व्यं(वि-अ) श्वैत्[h] ऋ १, ९२, १२;११३, ⌊१५(१२४,२)⌋; व्यं (वि-अ) श्वितन् ऋ १०, ७८,७.

विश्वेशँ–, °श्वँर्– १विश्व– द्र.

विश्वौजस्– २विश्व– द्र.

*वि-(श्व्य>)श्व्या[i]– -श्व्या ऋ २, ४२, १.

√विष् (बधा.), अवेषन् ऋ १,१७८, २; १०, ११४, १.

वेविषत् ऋ ८, १९, ११[j]; विविष्टः ऋ १०, ११७, ९; विवेक्षि ऋ ७, ३, ४; विविष्मः ऋ ६,२३,५; ६; विवेषः ऋ ७, ३७, ५; वेवेष्टु शौ २, १२,८; पै २, ५,७; †विविड्ढि ऋ १, २७, १०; ८, ९६, १२; कौ १, १५; २, १०१३; जै १, २, ५; ४,९,४; अविवेः[k] ऋ ६,३१,३. †विवेष ऋ ३,३२,१४; ५,७७, ४; १०, २७, ⌊७(१८७, ५)⌋; तै १, ६, १२,३; २, ५,१२,५; मै ४, १२,३; १४,१८; †विवेष ऋ २, ३५, १३; ७, २१, ४; काठ ८, १६; ३५, ३; ३८, ७; क ४८, ४; विविषुः ऋ ६,३२,

---

a) =त्रिश्व-ह (तु. तत्रत्यं टि.)।

b) पाभे. पृ २३३२ *m* द्र.।

c) विप. (सर्वदेत्र रोगहरा- ⌊रुद्र-तनू-⌋)। बस. उप. भाप. =रोगनिवारणसामर्थ्य-।

d) पाभे. पृ २९१८ *g* द्र।

e) त्रिश्वा-हा इति स्वरः? यनि. शोधः (तु. ऋ. प्रभृ.; वैतु. सा. <विश्वा-हन्– इति?)।

f) विप. (सर्वशक्तिमत्- ⌊इन्द्र-⌋)। बस.।

g) नाप. (तक्मन्-)। गस. उप. कर्तरि अच् प्र.।

h) तु. PW. GW. प्रभृ. (तु. नवमो मन्त्रः, ऋ १, १२४,१ प्रभृ. च; वैतु. वें. सा. <वि√श्वि इति)।

i) विप. (श्वासहर्त्री- ⌊?अभिभा-⌋)। वि + श्वसित–> बस. *विश्वसिता–> यनि.। सस्थ. ?अभि-भा–> (अभि√वा>) अभि-वा– इति शोधः। 'हे शकुने, कापि श्वासावरोधिनी अभिवा त्वाम् (उत्पतन्तं) मा विदत्' इति वा। (वैतु. या ⌊९,४⌋, WAG ⌊३,३१ e⌋ प्रभृ., अव्य. इति कृत्वा <विश्वया ⌊सर्वतः⌋ इतीव, GW. विश्वी– ⌊=विश्व-⌋>तृ१ इति?)।

j) धा. भक्षणे वृत्तिः (तु. पृ २९४४ *c*)।

k) धा. नाशने वृत्तिः।

५; अविवेषीः ऋ ४, १९, १०; २२, ५; †अविवेषीः ऋ ७,१९, ५; शौ २०, ३७, ५.
विष्[a]– विषः[b] पै ५,१०,४; ५.
†१विष[c]– -षः ऋ ८, १९, ११[d]; १०, १०९, ५; शौ ५, १७, ५; पै ९, १५, ५.
१विष्ट,ष्टा– -ष्टम् ऋ ३, ३०, ६[e,f]; काठ ४०,३; पै १,९१,३; ३, ६, ४†[e]; -ष्टा तै ४, ४, ५,१; २[२]; मै २, ८, १४[३]; काठ ३९, ३.
विष्टा(ष्ट-अन्त>) न्ता[g]– -न्ता ऋ १०, ९३, १३.
विष्टि[h]– -†ष्टिभिः ऋ १,९२,३; कौ २,११०७; -ष्टी ऋ १,२०,४.
विष्ट्वी ऋ १,११०,४; ३, ६०, ⌊३: १०,९४, २⌋; खि ५,५,६.
†वेविषत्– -षत् ऋ ३, २, १०; १०, ९१, ७; १०९, ५; मै ४, ११, ४; कौ २, ३३३; जै ३, २८, ५; शौ ५, १७, ५; पै ९, १५, ५; -षतः ऋ ६,२१, ५.
वेविषाण[i]– -णाः ऋ ७,१८, १५.
१वेष[j]– -षः का २,५, ७.
२वेष[k]– -षाय मा १, ६; का १,३, २; तै १,१,४,१; मै १,१,४.
वेष-श्रि,श्री[l]– -श्रिः[m] तै ३, ५, २,५; ४,४,१,२;५,३,६,२¶[२]; -श्रिया मै २, ८, ८[m]; -श्रियै मै २,८,८;-श्रीः[m] का १६,२,७; काठ १७,७; ३७, १७; क २६, ६; -श्रीम् मै २,८, ८.
वेषण– -णम् पै २, ६२, ४[n]; -णे ऋ ५, ७, ५.
वेषणा[o]– -णा ऋ ४, ३३, २.
वेष(त् >)न्ती– -न्तीः ऋ १, १८१, ६.
१विष– √विष् (बधा.) द्र.
२विष[p]– -०ष शौ ४, ६, ३; पै ४, २१,३[q]; ५, ८, २; ९, १०, ६; -षः पै २, ७४, ५?[r]; ५, १०, ९?; -षम् ऋ १,१९१,१०;११; १४-१६[२]; ६, ६१, ३; ७, ५०, ३; १०,८७,१८; १३६, १; खि

a) भाप.। धा. हिंसायां वृत्तिः।
b) पं१। सस्थ. परिः वर्जने कप्र. द्र.।
c) विप. (अग्नि-, ब्रह्मचारिन्- =ब्राह्मण-)। धा. दीप्तौ वृत्तिः।
d) 'यस्य गृहे अग्निः स्तोमं दधीत, (यस्य गृहे) वा (असौ) विषः (प्रचण्डः ⌊सन्⌋) हव्यानि वेविषत् (भक्षयेत्)' इति वा. (वैतु. सा. *विष्–> ⌊द्वि३⌋ विषः ⌊देवान्⌋ वेविषत् ⌊प्रापयेत्⌋ इति वा. ?।
e) पाभे. पृ १३२२ *h* द्र.।
f) भाप. (*हिंसन-)। धा. हिंसायां वृत्तिः (वैतु. वें. सा. √विश् 'प्रवेशने' इति, GW. प्रभृ. धा. व्याप्तौ वृत्तिरिति च ?)। सस्थ. विश्वं>(विष्वञ्च्->) -ष्वङ्क् इति (क्रिवि. न. द्वि१ ⌊तु. सपा. शौ ३, १, ४ विष्वक् इति पाभे., ?विष्वं गोरूपम् इत्यत्र टि. च⌋), ?अस्तु > अरस्त्वेषाम् इति च शोधः (उक्ते सपा. शौ. ?एषाम् > अरस्त्वेषाम् इति च ?चित्तम् > ⌊चृत् 'हिंसायाम्' > भावे⌋ चृत्त-> -त्तम् इति च शोधः)। सस्थ. सत्य- इति *शौर्यवाचकं भाप.। सपा. पै ३, ६, ४ अपि विष्ट- इति सत्य- इति चोभे अपि भाप. द्र.।
g) विप. [प्राप्तपरान्ता (राया- ⌊अंशमात्रे ⌊तु. पृ २०२२ *i*; २६९१ *f*; वें. सा.⌋)]। बस.।
h) भाप. (आवृत्ति-) क्तिन् प्र. स चोदात्तः उसं. (पा ३, ३,९६ ⌊तु. पाउभो २,१,१८९⌋)।
i) विप. (सन्नद्ध- ⌊तृत्सु-⌋)।
j) भाप. (सा. =कर्म-नामन्-)। घञन्ते उञ्छादित्वाद् अन्तोदात्तः (पा ६,१,१६०)।
k) भाप. वा नाप. वा (वैतु. भा. सर्वव्यापिने यज्ञायेति कृत्वा विप.)। घञन्ते ञित्स्वरः (तु. उ. म.; वैतु. भा. पचाद्यजन्ते वृषादित्वादाद्युदात्त इति)।
l) विप. (*दीप्तिमत्- ⌊यज्ञ-⌋)। बस. पूप. धा. दीप्तौ वृत्तिः (तु. सस्थ. वसुक– इति, वस्यष्टि– इति च पर्यायभूते विप.), उप. चोभयरूपमपि भाप. सत् <√श्रि 'आश्रये' (वैतु. शोभापर्याय इति प्रायोवादः ?)।
m) सपा. वेषश्रिः (बौश्रौ १४, २० : १२ च) <> वेषश्रिया <> वेषश्रीः (माश ८,५,३, ८ तां १,१०,११ गोब्रा २,२,१४ काश्रौ १७,११ ११ प्रभृ. च) इति पाभे.।
n) नाप. (परिवेषण- =भोजनादिक-)। तु. सस्थ. ?सूर– इति। o) भाप. (परिचर्या-)। युः प्र. उसं. (पा ३,३,१०७)। ०णा इति तृ१।
p) नाप. बप्रा.। उदकार्थे (निघ १, १२) <√*वृष् (√वर्ष्) '*रसभावे' (वैतु. या ⌊१२,२६⌋ < वि√ष्णा 'स्नाने' इति ?)। गरलार्थे <√*वृष् (√वृज्) 'हिंसायाम्' (वैतु.<√विष् 'व्याप्तौ' इति प्रायोवादः ?)। इह यथायोगं √*वृष् 'रसभाव-हिंसनयोः' >√विष् इति द्र.। q) पाभे. पृ २४९७ *m* द्र.।
r) वृषः इति शोधः ?।

५,७,४,१६?[a]; मै ४,२,१३$^{२}$¶; शौ ४,६,१; ४;५$^{२}$;६; ८; ७,१; २;५, १३, १$^{२}$; २; ४$^{२}$; ८-११; १९, १०; ६, १२,१; २;१००, २; ३; ७, ५८, १; ३;५;७; ८; ९३,१$^{२}$; ८, ३,१६†; १४,१५; १६; १५, ३; ४; ९, १३,१०-१२; १९; २०; १०, ४, ३; ४; १९-२१; २२$^{२}$; २६$^{४}$; १२, ४, ३९; ८, ४; पै १, ४४, ३; ४; ४६, २; ४; ४८,१; ४; ७१,२; ३; ९३,४; १११,१‡[b]; ३$^{२}$; २, १, १; २, १; ५; १४, ४; ३, ९,१$^{२}$-६$^{२}$; ७; १६, ६; ४, १७, २; ३$^{२}$; ५†;६†; ७; १९, १†; २†; ४$^{२}$†; ५; ६; २१, १; ४; ६; ७$^{२}$;२२,३; ५,८,३;४$^{२}$; ५; ७; ८; ९,१; १०, १; २$^{४}$[c]; ६; ३८,१†; ८,२,२; ३$^{२}$; ८-१०; ११$^{२}$; ७, १; २; ९, ९, १-३; ५; १०,२;३$^{२}$; ५-८;१०; १२$^{४}$; ११, ४; १२; १६, ५$^{२}$; १७,५; १९, ३; ११, २, १-४; ६; ९; १२; १३; ७, ४; ६; १०; १२, ३, ३; १७, ४$^{२}$; १५, १७, ५; १६, ७,८†; १५,२-४; १६,९; १०; १७,१; २; ७$^{५}$; ७४,१०; ७५,१;९; १०; १३५,८$^{२}$;१०$^{२}$; १४४, ५; १७, १९, ९; १९, ४, ४; ५; ९, १०; ११; १२; १३,५; ६; २०, ८; २३, ७$^{२}$;८; २६, १२; ४७, १०$^{३}$; ११;५४, ९; १०; २०, १३, ७; ९; ३२, ७$^{२}$; ३७, ३; ४२, ८; ९; ५५, १; २; –षम्ऽ-षम् पै १५,१७, ६; –षस्य ऋ १, १९१, १२; १३; १०, १३६,७; शौ ४, ६, २; ५, १८, ४; १०, ४, २५; पै १, ४४, १; २, २, ३; ३, ९, ७†; १६, ४;५; ४, १७, ७†; १९, ३†; २२, ४; ७; ५, ८, १; ९,१; ३८, ७†; ६, ७, ३; ९, १०,१;४$^{३}$; १७,४; १५, १६, ३-९; १७, १-७; १६,१७, ३; १९, २३, ९; १९, ४७, १०; २०,४२, १०; –षाणाम् पै ९, १०, ५; –षाणि शौ ६, ९०, २; पै १, ७१, १; १९, १८,१; –षाय पै ३,९,१[d]-६[d]; –षे शौ ५, १३, ५; ७, ९३, १; १०, ४, २६; पै ८, २, ५; १६, १७, ७; २०, ३२, ७; –षेण ऋ १, ११७, १६; १०, ८७, २३; मै १,८,४¶; ¶काठ ६,५; २५,४; ३१, ८; ¶क ४, ४; ३९, १; ४७, ८; शौ ५, १३, ४; ८, ३, २३†; ११, २, २६; पै ३, १०, ५; ८, २, ३; १६, ८,७†; १०६, ६; –षेभिः पै ३, ८,६[e].

विष-गिरि- -रिः शौ ४,६, ७; पै ५, ८, ६.

विष-द(न्त>)न्ती- -न्तीः पै ५, ९, ८.

विष-दूषण- -णः पै २, २, ४; ९, ८, ३-६; १०, ३; ११, ११; –णम् शौ ६, १००, १; १०, ४, २४; पै १, ४४, २; ३,१५, १-६; ४, २१, ४; २२, २; ६, ७,४-६; ९, १०, ९; ११,८;९; १४; ११, ६,११; १६,१७, ६; १९, १३, ४; २०, ५६,१.

विषदूषणी- -॰णि पै ६, ७, ८; –णी पै ६,७,९;८,७,४;११;१५, १६,३-९; १७, १-७; –णीः शौ ८,७,१०; पै ९,११,५;१६,१२, १०; –णीम् पै ४,२२,१[f].

विष-धान- -नः[g] शौ २,३२,६?[h].

विष-पुष्प[i]- -ष्पम् पै ४, १९, ६; ९, १०, ८.

विष-वत्- -वत् ऋ १०, ८५, ३४; शौ १४, १, २९; पै १८, ३, ८; –वान् पै ४, १७, १.

विषवती- -॰ति शौ ८,१४, १३; पै १६,१३५,८.

विषवत्-तर- -रम् पै ६, २२, २०.

विष-सर्प- > विषसर्प-तस् (:) खि २,१, ८.

वि(षु>)षा[j]- -षा शौ ७,११८,

---

a) पाठः? सपा. स्क. दु. ⌊या ५, १२⌋ वृषन्- > -॰षन् इति।

b) वि॰ इति स्वरः? यनि. शोधः। सपा. ऋ १०, ६०, ११ शौ ६,९१,२ रपः इति पाभे.।

c) ?॰षं कुम्भे > विष-कुम्भी- > -म्भि ⌊सं१⌋ इति शोधः (तु. सस्थ. टि. ?प्रतिहिता-)।

d) यनि. च सस्थ. (इदम्- > च१) अस्मै इत्यत्र च ष. अर्थे च. द्र.।

e) सपा. शौ १९, ५६, ६ ?द्विषेभिः इति पाभे. (तु. पृ १६९४ *n*)।

f) ॰णी इति पाठः? यनि. शोधः।

g) सपा. पै २,१४,४ निहितं विषम् इति पाभे.।

h) शोधः पृ २३२९ *j* द्र.।

i) षस. वा मलो. कस. वा। नाप.।

j) विप. (विषसंयुक्ता- ⌊ओषधि-⌋)। मत्वर्थीयः अच् प्र.।

२[a].

विषा(प-अ) द्[b]- -षात् काठ २५,४.

वि√ष(<स)ज्, ञ्ज्, ¶विषजन्ति तै ६, ४,७,२; मै ४,५,८; काठ २७, ३; क ४२, ३.

वि-षक्त,क्ता- -क्तम् शौ १२,३,१३; -क्ताम् ऋ १, ११७, २०.

विष-दन्ती- प्रभृ. २विष- द्र.

विषभ[c]- -भस्य पै ३,७,२[d].

वि-ष(<स)म[e]- -¶माः तै २, १, ३, १; मै ४, ४, १०; काठ १३, ३; -मान् मै २, ५, ३¶; -मे खि ४, २, ९; तै २, १,३, १; मै २, ५, ३; काठ १३, ३; -मेभ्यः मा ३०, १६; का ३४, ३, ३; -मेषु खि ४,२,१०.

विषमि(त>)ता[f]- -ता पै १६, १२०,७.

विषु-वत्- प्रभृ. २विषु- द्र.

वि√ष (<स) ह्, विषहामहे शौ ४, १०,२; पै ४, २५, ३; विषहस्व शौ १९,४६,२; पै २,५२, ५, ४, २३, २; ९, २४, ७[g]. व्यं(वि-अ)सहन्त[h] तै ४, ३, ११, ३; काठ ३९, १०; शौ ३, १०,१२; पै १,१०६,४; विषहेय मै २, २, १०¶.

विषेहिरे पै ४, ११,७.

वि-षह्य ऋ ७,२१,७; मै ४,१२,३.

वि-षासहि[i]- -हि पै ८, २०, ३; -हिः ऋ १०, १५९, १; १७४, ५; शौ १, २९, ६†; १२, १, ५४; १९, ३३, ४; पै १, ११, ५; २,४१,१†;५,३,४; ७,७,७; १२,५,४;१७,६,२; १९,५०,६; -हिम् ऋ १०,१६६, १; शौ १७, १, १-५; पै १३, ३, ४; ६†; १७, १३, १०; १८, ३०, १-३; -ह्यै शौ १९,२३,२७[j].

?विषा[k] पै ५,२८,६.

?विषाक्षम्[l] खि ५,१४,२.

?विषाण[m]- -णम् ऋ ५,४४,११.

विषा(ण>)णा[n]- -णया मै ३, ६, ८¶[o]; ७, ७¶; शौ ३, ७, १; पै ३,२,१; -णा ¶काठ २३,४[2]; ¶क ३६, १[2]; शौ ६, १२१,१; पै ३, २२, १; १६, ५१, २; १९, ३१, १२[p]; -णे मै १, २,२; शौ ३,७,२; पै ३,२, २.

विषाण-का[q]- -का शौ ६,४४,३[p].

विषाणिन्[r]- -णिनः ऋ ७,१८,७.

विषातकी[s]- -की शौ ७,११८,२.

?विषादन[t]- -नम् खि ५,२,३[u].

‡वि-षाद(न>)नी[v]- -नी पै २,

a) सपा. पै २०,१६,२ वृषा इति पाभे.।

b) व्यप. (असुर-)। वैतु. MW. विप.।

c) विशफ- इत्यनेन सन्यायता द्र.।

d) पाभे. पृ २१६० e द्र.।

e) विप. (उच्चावच- ⌊लोक-, स्तोम-⌋), नाप. (विषम-स्थल-)। बस. षत्वम् (पा ८,३,८८)।

f) तदस्यसंजातीयः इतच् प्र.।

g) पाभे. पृ २२०३ k द्र.। h) =सपा. पागृ ३, ३,५। मंब्रा २, ३, २१ असहन्त इति पाभे.।

i) विप.। उप. ताच्छील्ये किः प्र. (पावा ३,२,१७१)।

j) नाप. (विषास° इत्युपक्रान्त- १७तमकाण्ड- ⌊तु. PW. W. प्रभृ.⌋)। k) तु. सस्थ. टि. हुविस्->-विषा।

l) पाभे. शोधश्च पृ २४६५ e द्र.।

m) वा.? पपा. =वि-सान- इति। <वि√षो(>षा ⌊तु. GRV. प्रभृ.⌋) वा <वि√सन् ⌊तु. वें. सा.⌋ वा।

n) नाप. स्त्री. (विषाण-, *शृङ्गनिर्मित-कृन्तनी-)। (√वृष् 'हिंसायाम् = कर्तने' ⌊तु. वृक-⌋>) *वृष(न्त>) वृषन्ता->यनि. (वैतु. पपा. अनु <वि√षो 'बन्धने' इति प्रायोवादः ?)। पपा. वि-सा° इति।

o) सप्र. तै ६,१, ३,७;८ कृष्णविषाणया इति पाभे.।

p) सपा. विषाणा<>विषाणका इति पाभे.।

q) नाप. (ओषधि-विशेष-)। मत्वर्थे कः प्र।

r) नाप. (विषाणधृत्युपलक्षितवर्ग- इति वें. सा.), व्यप. (एतदाख्य-जन-) इत्यर्वाञ्चः। व्यु. ?।

s) विप. (विच्छेदनी- ⌊तृष्टिका-⌋)। (√वृष् ⌊=√व्रश्च्⌋ '*छेदने'> भावे) *वृशात्->*वृषात- (क>) की->यनि. (तु. सपा. पै २०, १६, २ वृषा° इति पाभे., पपा. नावग्रहश्च; वैतु. सा. W. ओषधिभेदे नाप. <२विषु- ⌊गरल-⌋+आ√तङ्क् 'संयोगे' इतीव च ?)।

t) पाठः ? (वि√षस्ज् 'बन्धने'> भावे *वि-षस्जन->) वि-षाजन->-नम् इति शोधः। 'एषु (शत्रुषु) विषादनम् आनह्य (आबधान)' इति वा.। सस्थ. ?धियम् (=सपा. शौ ⌊६,६७,३⌋ ?भियम् इति, पै ⌊१९, ६, १५ मूको.⌋ ?भयम् इति)>अभयम् इति सर्वत्र शोधः।

u) शौ ६,६७,३ पै १९,६,१५ ?वृषाजिनम् इति पाभे.। शोधश्च तत्रैव द्र.।

v) विप. (उद्दीपिनी- ⌊शची-⌋)। <वि√सद् '*दीप्तौ' (तु. सपा. ऋ १०, १५९, २ आपमं १, १६,२ वि-वाचनी (<वि√वच् ⌊*=√वर्च्⌋ 'दीप्तौ') इति पाभे.।

४१, २.
?विषाध्यततत् पै १९, ३९, ३.
?विषाध्य चिषसध्यतत् पै १९, ३, ३.
?विषामरुक्षतासुत पै १,१११, ३.
विषासहः[a] पै ६, ९, ५.
वि-षासहि- वि√षह् द्र.
?विषा सुत[b] पै ५,१०,१.
वि√षि, षी (<सि, सी)[c], वि… सितम् ऋ ८, ५, ९[d]; वि… सीमहि ऋ १,२५,३[e].
वि-षित, ता- -तः ऋ ६, १२, ५; १०, २७, १४; काठ १६, १२; क २५, ३; -तम् ऋ ५, ८३, ७; तै ३,१,११,६†; काठ ११, १३†; शौ १, ३, ८; पै १९, २०, १३; २०, ४०, ३; -ताः ऋ ५, ८३,८; शौ ४, १६,६[f]; -तासः ऋ ६,६,४; -ते ऋ ३, ३३, १[g]; शौ ४, १, ६.
विषित-स्तुक,का[h]- -कः पै १९,१४, ४[i]; -कम् खि १,२,११; -का ऋ १,१६७,५.
विषित-स्तुप[j]- -पः शौ ६, ६०,१[i].
वि√षि(<सि)व्, ¶विषीव्यन्ति मै २, ४, ५; काठ १२, ३; ४; २५.८; १०; क ४०,१; ३.
¶वि-ष्यूत- -तः काठ २५, १०; क ४०,३; -तम् तै ६,२, १,४; ९,४; काठ २४,८; क ३८,१.
वि√षु (<सु [अभिषवे])> †φवि-षुष्वाण[k]- -णासः ऋ ९,१०१,११; कौ २,४५३; जै ३,३४,११.
विषु,षू[l]-
विषु-*ण(<न)क्[m] ऋ १,३३, ४.
विषु-रूप,पा[n]- -पः ऋ ५,१५, [४ (७, ८४, १)]; मा ८, ३०[o]; का ९, ५,३[o]; -पम् ऋ ७,२७,३[p]; मा ६,२०‡[q]; का ६, ४, ५‡[q]; ¶तै ५, ३, ८, ३; मै १, २, १७‡[q]; ४,१४,१४†[p]; काठ ३, ७‡[q]; क २, १४‡[q]; शौ १९, ५,१†[p]; पै २०,१८,४†[p]; -†पा ऋ ७, ८४, [(५, १५, ४) १]; १०, १०, [२; १२, ६][q]; शौ १८, १, २[q];३४[q]; -पाः तै १, ३, १०, १[q]; ¶५, ३,८,२; ६, ३,११, २[२q]; -पाणि ऋ ६,७०, ३; तै ५,३,८,२¶; -पान् ¶तै ५, ३,८,३; -†पे ऋ १, १२३, ७; १८६,४; ६, ५८, १; तै ४, १, ११, ३; मै ४, १०, ३; काठ ४, १५; कौ १, ७५; जै १, ८, ३; -पेषु ऋ १०, ६४,५.
विषू-वत्[r]- -†वतः ऋ १,८४,१०; मै ४, १४, १४; कौ १, ४०९; २,३५५; जै १,४०, १; ३,२९, १२; शौ २०, १०९,१; -†वता ऋ १, १६४, ४३; शौ ९, १५, २५; -वति काठ ३३, ८; शौ

a) सपा. तैब्रा २,४,७,३ नृणाम् अह इति पाभे.।
b) विषाऽऽसुत->-सुत (विप. [सुरा-]) इति शोधः।
c) =वि [निषेधे (वैतु. सा. [पक्षे] = प्रकर्षे इति)+√सृज् '*बन्धने' [तु. स्रज्-]>)] यनि. धा. (वैतु. <वि√षो>षा>षि, षी इति प्रायोवादः)।
d) वैतु. ORN. (√चि '*बन्धने' [तु. ऋ १, ९०,४ प्रभृ.]>) चितम् इति शोधः स्यादिति?। सस्थ. पृथ्-=पद्-=संपद्- इति (वैतु. =मार्ग- इति प्रायोवादः?)।
e) वैतु. सा [पक्षे] <वि√सिव् इति?।
f) पाभे. पृ २६८१ *j* द्र.।
g) वैतु. सा. <वि√सि 'बन्धने' इति, या ९, ३९ [पक्षे] वि√सद् इति च।
h) विप. (अर्यमन्-, २रोदसी-, वायस-)। बस. पूप. च उप. च बप्रा. द्र.।
i) सपा. °तस्तुकः<>°तस्तुपः इति पाभे.।
j) = विषित-स्तुक-। RW. °स्तुपः इति शोधार्हम् (तु. W.)।
k) कर्मणि लिटः कानच् प्र. (तु. सा. PW. प्रभृ. च; वैतु. वें. वि…समस्वरन् इत्यन्वय इति)।
l) विप. सत् (विष्वच्- [यद्र.]>) *विषुच्-> (संहितायां) *विषू-> यनि. (वैतु. या [११, २३; १२ १७] प्रभृ. <*विषन- इति; स्क., सा [ऋ १,८४,१०] <√विष् 'व्याप्तौ'+कुः प्र. इति, PW. प्रभृ. विष्व-सन्यायमिति; GW. <*वि(<द्वि-) इतीव च?)।
m) विप. (*विष्वग्विनाशवत्-)। वा. क्रिवि. सत् न. द्वि१ द्र.। उस. उप. <√नश् 'प्रणाशे' (वैतु. पपा. नावग्रहः, सा [पक्षे]<विष्व[षु-श्र]च्- इति, PW. GW. प्रभृ.<विषुण-+√अच् इति?)।
n) =विश्वरूप-।
o) पाभे. पृ २९३७ *n* द्र.।
p) पाभे. पृ २९३७ *p* द्र.।
q) सपा. विषुरूपम् (माश ३,८,३,३७ च)<>विषुरूपा<>विषुरूपाः इति च पाभे.।
r) बप्रा. सत् विप. (अग्नि- प्रभृ.), नाप. (यज्ञ-भेद-)। °षु° इति पपा.। उस. उप. <√*वत् [*=√वृत्] 'वर्तनादौ' (वैतु. सा. प्रभृ. मतुपः उदात्तत्वम्)।

९,३,८; पै १६,३९,८; –वन्तः तै ७, ४, ३, ४¶; –वन्तम् शौ ११,९,१५; पै१६,८३,५; –वान् ¶तै ७,४,३,४; ८,२; मै ४, ३, १०[२]¶; काठ ३३,८; पै६,९,२.

विषू-वृ॒त् (वप्रा.)[a]– -†वृत् ऋ १०, ४३,३[b]; शौ २०,१७,३; –वृतः शौ १०,२,११; पै १६, ६०, ३; –†वृतम् ऋ २, ४०, ३; मै ४, १४,१.

वि॒ष्व( षु-अ )च्,ञ्च्– -षूचः ऋ ६, ५९,५; ७, ८५,२; १०,७९,७; ¶तै ५, २, ९,४; मै ३,२,७¶; शौ ३, १, ५; २, ३; पै ३, ५, ३; ६,५; ४, २५,४; १९, ४१, ६; –षूचोः ऋ ७, १८, ६; –ष्वक्[c] ऋ १, ३६,१६; १४६, ३; ४, ४, २; १२, ४; ६,६,३; ७, ३४,१३; ४३, १; ८, ४५, ८; ६७,२१; ९, ९७,१६; १०, ३६, ९; ३८, १;८९,४; १३४, ५; मा १३, १०†; का १४,१, १०†; †तै १, २, १४, १; ३, ३,११,१; ४,७,१५, ७; †मै २, ७,१५;३,१६,५; काठ २,१५†; १२, १०¶; १६, १५†; ¶३४, ६;१८; क २५, ६†; कौ १, ३३९†; जै १,३५, ८†; शौ १, २७,२[d]; ३,१,४‡[e];६,६; पै ३, ३, ४; ११, ७, ६[२]; १०; १९, ३१,५[d]; –ष्वङ् ऋ १०,९०,४; मा ३१, ४†; का ३५, १, ४†; ¶तै १, ५, ९, ७[२]; २, ३, २, ६; ४, १२, २; ५,२,२; ६, ५,११, ३; मै १, १०, ५¶; कौ ३,४,४†; जै २,३,७†; शौ ११, १०, ३३; १९, ६, २†; पै ९, ५, २†; –ष्वञ्चः ऋ १०, २७, १८; तै ३, ३, ७, १¶; मै २, ५, ३¶; शौ १, १९, २[f]; १९, ३८, २[g]; –ष्वञ्चम् ऋ ९, ७५, १; ¶तै २, ६,५,४[२]; मै २, ५, ९¶; ३,३,८¶; †कौ १, ५५४; २, ५०; †जै १, ५७, १; ३, ५,९; शौ २,३३,७‡[h],२०,९६, २३‡[h]; पै ४,७,७‡[h]; –ष्वञ्चौ खि ५, २२,२; ¶तै ५, २,१०, ६; ६,३,९, ६; शौ २०,१३६, २; पै ६,२२,२२; १६,८,१०.

वि॒षूची[i]– -ची ऋ ३, ५५, १५; तै ६,३,९, ६¶; मै ३,६, ६¶; १०, १¶; ¶काठ ३०, ५; शौ १, २७, २; पै १९,३१, ५; –चीः ऋ १,१६४,[३१;१०, १७७,३]; २,३३,२; ६, २५,२; ३०,५; मा ३७,१७†; का ३७, ३,४†; तै ५,२,१०,६¶; मै १, १०,५[२]¶; ७¶; ४,९,६†;१४, १२†; १४†; ¶काठ ३५, २०[२]; ३६,१; क ४८, १८[२]¶; शौ १, १९,१; ९.२, २१; १५, ११†; १९,८,६;१५, २; पै १,२०, १; ३,३५, २; १५,२०, १†; १६, ६८,१०†; ७८,५; २०,२१, ४; २४, ६; –चीम् ऋ ६, ७४, २; ८, १४, १५; तै १,८,२२,५†; ५, १,६, १¶; मै ४, ११, २†; काठ ११, १२†; शौ ६, ९०, १; ७, ४३, १†; २०, २९, ५; पै १,१०९, १; १९,१८,२.

वि॒षूचि-का[j]– -का मा १९, १०; का २१,१, ९; मै ३, ११, ७; काठ ३७,१८.

वि॒षूचीन, ना– -नम् ¶तै ५, २, ६, ३; ९, ६; काठ २०, ५¶; क ३१,७¶; शौ ३, ७,१; पै ३,२,१; –ना ऋ १, १६४, ३८; का ३,२, ७[k]; शौ ९,१५, १६†; पै १६, ६९, ७†; –नाः पै ११, ७, ६[l]; –नान् मा १७, ६४[k]; का १८,५,१५[k]; तै[k] १, १, १३, १; ६,४,२; ४,६, ३, ४; मै[k] १, १, १३; ३, ३,८¶; काठ[k] १, १२; १८, ३; २१, ८; क २८,३[k]; शौ ८,६,१०; पै १६,७९,१०; ८१,२; –¶नानि तै ५, २, ९, ४; मै ३, २, ७; काठ २०, ८; क ३१, १०.

वि॒ष्वग्-वात[m]– -तः[n] तै ४, ३, ३, २; काठ ३९,७; पै ५,७,२;

[a]) विप. (इन्द्र-, रथ-, प्रभृ.)। उस. उप.<√वृत् (बधा.)। पपा. °षु– इति।

[b]) उप. <√वृ(*=√भृ) 'धारणे' (वैतु. वर्तने वारणे वेति प्रायोवादः ?)।

[c]) वा. क्रिवि. द्र.।

[d]) पाभे. पृ २९२६ *c* द्र.।

[e]) पाभे. पृ २९१४ *e* द्र.।

[f]) पाभे. पृ २९२६ *d* द्र.।

[g]) पाभे. पृ २९२६ *e* द्र.।

[h]) सपा. ऋ १०,१६३,६ विभे.।

[i]) विप. (अमीत्रा-, उषस्-, दुर्-, पथ्या- प्रभृ.)। स्त्री. ङीपि स्वरेऽविशेषः।

[j]) नाप. (रोग-भेद)। संज्ञायाम् कन् प्र. ह्रस्वश्च।

[k]) सपा. °ची॒ना <> °ची॒नान् (माश ९, २, ३, २२ बौश्रौ १,१९ : १६ भाश्रौ ३,५,११ च) इति पाभे.।

[l]) °चीन् इति पाठः ? यनि. शोधः (तु. मूको.)।

[m]) नाप. (वात-भेद-)।

[n]) पाभे. पृ ९३९ *i* द्र.।

-ते पै २, ३६, ५.

विष्व(षु-अ)द्रि-> विष्वद्रि̱य(द्रिय्-अ)च्[a]- -यक् तै १,७,१३,३‡[b].

†विष्वद्र्य॑(द्रि̱-अ)च्[a]- -द्र्यक्[b] ऋ ७, २५, १; मै ४, १२, ३; काठ ८, १६.

†वि̱षुण[c]- -णः ऋ ५, ३४, ६[d]; ८, २९,१[e]; -णम् ऋ ३, ५४, ८[f]; -णस्य ऋ ४, ६,६[e]; ७, २१, ५[g]; तै ४, ३, १३,१; -णाः ऋ ५, १२, ५; -णे ऋ ८ ९६,१४; शौ २०, १३७, ८.

विषु̱णक्- विषु- द्र.

विषु̱द्रु̱ह्[h]- -द्रुहा ऋ ८,२६,१५.

वि̱-षुप्त- वि√ष्वप् द्र.

वि̱षु-रूप- विषु- द्र.

?वि̱षु वि̱श्वाः[i] शौ २०, ९५, ४.

विषुष्वाण̱- वि√षु द्र.

वि̱षूचिका-, वि̱षूची-, विषूची̱न-, विषू-व̱त्-, °वृ̱त्- विषु- द्र.

वि √षो(<सो)[j]> ष्, षा, षि, ¶वि̱ष्यति मै ३,१,६[2]; ४,८,५; काठ १९, ५, क ३०, ३; वि̱ष्यन्ति ऋ १,८५,५; वि̱ष्यामि मा १२,६५; का १३, ५, ४; तै १,१,१०,२‡[k]; ३, ५, ६,१‡[k]; ४,२,५, ३; मै २, ७, १२; काठ १६,१२; क २५,३; शौ ६,६३, १; १४, १, ५७; १९, ६८,१; पै १८, ६, ५; ६‡[k]; १९, ११, ४;३५,२; वि̱ष्यतु ऋ १, १४२, १०; २,३, ९; मा २७, २०‡[l]; का २९.२,१०‡[l]; तै ३,१, ११, २†; ४, १, ८, ३‡[l]; मै १, १, १२[m]; ४,१४,८†; पै९,१,१०‡[l]; †वि̱ष्यताम्[l] ऋ २, ४०, ४; मै ४,१४,१; क २९, ५; वि̱ष्यस्व ऋ १, १०१,१०; †वि̱...स्यस्व ऋ ३, ४, ⌊९; ७, २,९⌋; तै ३, १, ११, १; मै ४, १३, १०; वि̱षाहि[n] ऋ ४, ११, २; वि̱-य, > ष्या ऋ ५, ८५,८; ९,९५, ५;९७,१८; तै ३, ४, ११,६†; मै १, २, २; ३,२६[o]; २, १२, ६‡[l]; ४, १४, ३†; काठ ११, ९[o]; १८,१७‡[l]; २३, १२; शौ ३, ७, २; ५, २७, १०‡[l]; ६, १२१,१; ७,१९, १[o]; पै ३, २, २; २२, १; १६,५१, २; २०, ७,३[o]; वि̱ष्यतम् ऋ १०,१४३, २?[p]; वि̱ष्यध्वम् ऋ १०, ३०,

[a]) व्यु. पृ ५४९ *j,k* द्र.।

[b]) सपा. °द्रि̱यक् <> °द्र्य॑क् इति पाभे.।

[c]) अर्थः ?। पपा. नावग्रहः। <वि̱षु- इति कृत्वा विप. [ विश्वगञ्चन-, नानारूप-, पराङ्मुख- (⌊यथायथम्⌋ अग्नि-, इन्द्र, सखि- प्रभृ.)] इति वें. सा. PW. GW. प्रभृ.। स्वमतं तु उत्तरत्र *d, e, f, g* द्र.।

[d]) विप. (विशमन- = मारक- ⌊इन्द्र-⌋)। <√विष् ⌊=√पिष्⌋ '*हिंसने'।

[e]) विप. (दीप्तिमत्- ⌊यक्र. सोम-, अग्नि-⌋)। <√विष् ⌊=√*भृष् = √भृज्⌋ '*दीप्तौ'।

[f]) *नाप. (पक्षिवर्ग-)। <द्वि̱-+ (√सू 'प्रसवे'> भावे) सु̱वन-> बस. *द्वि̱-सवन-> यनि.।

[g]) विप. [ विषम- (तु. या ⌊४, १९⌋ प्रभृ. *= कष्टप्रद- ⌊जन्तु-⌋)]। 'सः (इन्द्रः) अर्यः (वशी) विषुणस्य जन्तोः (कर्मणि ष.) शर्धत् (विनाशयेत् ⌊<√श्रृध् 'हिंसायाम्'⌋)' इति वा.। <√विष् '*हिंसने'। या. ?यो > अर्यो इति शोधः।

[h]) नाप. (*भार-वाहक-)। (√वृष् ⌊=√वह्⌋ 'वहने'> कर्मणि) *वृषु̱त्र- (नाप. ⌊वहनीयवस्तु-⌋) + (√वह् > कर्तरि) *उ̱ह्-> उस. *वृषु̱त्रो(त्र-उ̱)ह्-> यनि. (वैतु. पपा. नावग्रहः, = विश्वतो हिंसक- इति कृत्वा वें. सा. नाप. ⌊शर-⌋ इति, PW. GW. प्रभृ. विप. इति, PW. °ह- वा °ह् वेत्यपि)। सस्थ. ?याति̱म् > आ̱-यातम् इति शोधः, चतुर्दशे मन्त्रेऽपि ?प̱रियातम् > परि-आ̱-यातम् इति च शोधः। 'अस्मभ्यं सु (*आशु) *आयातम्, (आगत्य च) नृपाय्यं (*नर्म-भर्यम् = आनन्दभरितं) वर्तिः (*स्तोत्रं ⌊च⌋) यज्ञं (*हविरादिकं ⌊च⌋) विषुद्रुहा इव गिरा (*घाटया, गलेन) ऊहथुः (वहतम्)' इति वा.।

[i]) वि̱...न̱शन् इति शोधः (तु. पृ २८७१ *h*)।

[j]) उपसृष्टस्य धा. विमोचने वृत्तिः।

[k]) पाभे. पृ २१९१ *h* द्र.।

[l]) सपा. वि̱ष्यतु (तैब्रा २,८,१,४ आपश्रौ २०,२०,९ च) <> वि̱ष्यताम् (तैब्रा २,८,१,५ च) <> वि̱ष्य इति पाभे.।

[m]) सपा. तै १,१,२,२ मै १,१,२; ४,१,२ काठ १,२; ३१,१ क १,२; ४७,१ ग्रथ्नातु इति पाभे.।

[n]) तु. सा. PW. GW. प्रभृ.; वैतु. वें. <√वि √षह् इति।

[o]) सपा. तै २,४,८,२; ३,५,५,२ वि̱सृजा इति पाभे.।

[p]) 'अत्रिं दृढं ग्रन्थिं न (इव) यविष्ठम् (<√यु = ⌊√यभ् 'मिश्रणे *= बन्धने'⌋ *अत्यन्तमिव बद्धं सन्तं) *रजेः आ (बन्धनात्) विष्यतं (मुञ्चतम्)' इति वा.। सस्थ. ?अरेणवः > *आ (अलत), रेणवः इति द्वि-पदः शोधः। एवं ?र̱जः > (*र̱जि- > पं१) र̱जेः इत्यपि।

११; विष्यत>ता मै ४,१४,९.

वि-ष्युत्- -ष्यन् ऋ ५, ४५, १?[a]; खि २, ३, १.

विष्कन्ध[b]- -न्धम् तै ७, ३, ११,१[c]; काठ ४३, १[c]; शौ[d] १, १६, ३; २, ४, ३; ४; ३,९,२; ४,९,५; १९, ३४, ५[e]; पै[d] १,१०, २[f]; २, ११, ३; ४; ३, ७, ३; ८, ३, ५; ११, २, १०; १४[g]; ३, ५; १९, ४९,५; -न्धस्य पै १, ५८, १; ४; -न्धात् शौ[d] २,४, २; ५; पै[d] २, ११, ५; -न्धानि शौ[d] ३,९, ६; पै ३, ७, १.

विष्कन्ध-दूषण[h]- -णम् शौ २, ४, १; ३, ९,६; १९, ३५,१; पै ३, ७, १; ११, ४, १.

वि√ष्क(<स्कभ्, स्तभ्, व्यं (वि-अ) स्कभ्नात् तै १, २, १३, २‡[i]; ‡व्यं( वि-अ )स्कभ्नाः[i] मा ५, १६; का ५,५,३; मै १,२, ९.

†वि-ष्कभि(त>)ता- -ते ऋ६,७०, १; मा ३४, ४५; का ३३,२,८; मै ४, ११, १; काठ १३, १५; कौ १, ३७८; जै १, ३९, ९; पै १६,१०१, १$[j].

वि-ष्कुभे ऋ ८, १००, १२.

वि-ष्कभ्नत्- -भ्नन्तः ऋ ३, ३१, १२.

वि-ष्कम्भ[k]- -म्भः पै १५,२, ३‡[l]; २०, २६, ६; -म्भेण पै २०, २६, ५.

वि√ष्कभाय(<स्कभ-), विष्कभायति ऋ १०, ४४, ८; शौ २०, ९४,८; पै५,२,६[m]; विष्कभायत् ऋ ५, २९, ४; ६, ४४, २४; वि···अस्कभायत्[n] काठ १०, १३; शौ ४,१,४; पै ५,२,४.

वि√ष्कम्भाय (<स्कम्भ-) विष्कम्भायतु पै २०,२६, ६; विष्कम्भाय पै २०,२६,५.

१विष्ट- √विष् (बधा.) द्र.

२?विष्ट[o]- -ष्टः ऋ १,१४८,[(७१,४) १]; मै ४,१४,१५†.

†विष्टप्[p]- -ष्टपः ऋ ८, ३४, [१३; (९७,५; ९,१२,६;१०७,१४)];

---

a) त्रिष्युत् इति शोधः (तु. सस्थ. टि. ? व्रजिनीः)।

b) विप. (*बहुकष्टप्रद-)। *विस्- (*=वि) + (√कन्ध् [*=√गन्ध्] 'अर्दने'>भावे) *कन्ध्य->बस. *विष्क-(स्-क)न्ध्य->यनि.। नाप. (बप्रा. [रोगसामान्य-,*खर्जन-रोग-])। द्वितीये अर्थे *विस् (*=वि)+(√*कृन्ध् [√कृन्त्] 'छेदने' > भावे) *कृन्ध्य-> बस. *विष्कृ (स्-कृ)न्ध्य->यनि. (वैतु. पपा. सर्वत्र वि-स्क° इति?)।

c) क्रिवि.। '(अस्मद्द्वेषिजनकृतः) यज्ञः विष्कन्धं (तमत्यन्तं कन्दयन् यथा स्यात्तथा) तस्मिन् (अस्मद्द्वेषि-जने) हीयतां (विलीयताम्)' इति वा. (वैतु. भा. सा. K. सस्थ. शरीर- इति देहार्थे नाप. इति कृत्वा तस्य विप. [स्कन्धरहित-] इति, PW. प्रभृ. रोगभेदे नाप. इति च?)।

d) नाप.।

e) *विप. (ओजस्- [तु. प्रथमो मन्त्रः] *= रोग-)। सस्थ. संस्कन्ध-इत्यपि पर्यायभूतं विप. द्र.।

f) विष्कन्दम् इति मूको. (तु. W.)।

g) पाभे. पृ २२६७ *i* द्र.।

h) विप. (विष्कन्धरोग-निवारक- [मणि-])। उस. उप. कर्तरि ल्युट् प्र.।

i) सपा. व्यस्कभ्नात् (बौश्रौ ६, २४ : ३५ च) <> व्यस्कभ्नाः (माश ३, ५,३,१४ च) <> ऋ ७,९९,३ क २,४ व्यस्तभ्नाः<>काठ २,१० व्यष्टभ्नाः<> तैआ १,८, ३ भाशि १२० व्यष्टभ्नात् इति पाभे.।

j) सपा. शौ १०,८,२ विष्टभिते इति पाभे.।

k) नाप. (आधारभूत-स्तम्भ-)। गस. उप. घञ् प्र.।

l) सपा. विष्कम्भः <> विष्टम्भः (आश्रौ ४,१२,२ च) इति पाभे.।

m) सपा. शौ ४,१,४ अस्कभायत् इति पाभे.।

n) सपा. खि ३, २२, ३ [यत्र ?विजातः>वि, जातः इति शोधः] तै २,३, १४, ६ ऐब्रा १,१९ आश्रौ ४,६,३ वि···अस्तभायत् इति पाभे.।

o) विप. (अतिवेगवत्- [मातरिश्वन्- = वात-])। पाठः? (वि√*भृष् 'अतिवेगे'>गस. कर्तरि क्ते) *वि-भृष्ट- इति शोधः। सपा. ऋ १,७१, ४ वि-भृत- इति पाभे. =वि+[√*भृष् 'गतौ' > भावे] भृष्ट- >बस. *वि-भृष्ट- इति कृत्वा तत्रापि शोधः द्र. (तु. छन्दः; वैतु. वें. सा. यनि. सत् <√विश् इति, ORN. <√विष् 'व्याप्तौ' इति। पाठः? इति च कृत्वा LR. विश्वितः इति, GW. विषितः इति शोधः?)।

p) नाप. स्त्री. (स्वर्ग-)। व्यु.?। पपा. नावग्रहः। (√विश् [=√वृष्] '*उच्चभावप्रकाशयोः'>) विष्ट- (उच्चैः-स्थित-, प्रकाशमान-) + (√वृ '*निवासे'>) *वारा-(लोक-, स्थान-)>बस. *विष्ट-वारा->*विष्ट-वार-> *विष्ट-पा->यनि. इति (वैतु. या [२,१४]<आ√विश् [अर्थः?] इति, < वि√ष्टम्भ् इति प्रागर्वाक्-साधारणः प्रायोवादश्च?)।

पै १४, ३, २२[a]; १८, १६,६[b]; –ष्टपम् ऋ ८, ३२, ३; ९,३४, ५;४१,६; कौ २, २४७; जै ३, २१, १२; शौ ११, १, ७$; पै १६,८९,७$[c]; –ष्टपि ऋ १,४६, ३; ८, ९७, ⌊(३४, १३)५; ९, १२,६;१०७,१४⌋[d]; १०,१२३, २; कौ २, ५५१;१०८०; जै ३, ४३, ७; $शौ १०, १०, ३१; ११, ५, २; १३, १, १६[b]; १८, ४, ४; $पै १६, ७२, १; ११०,१.

**विष्टप**[e]– -पम् ऋ ८, ६९, ७; ९, ११३, १०; मा १४, २३; १८, ५१; का १५, ७, २; २०,३,१; तै ४, ३, ८, १;७, १३, १; ५, ३, ३, ५[२]; ७, ५,८,५¶; मै २, ८,४;१२,३; काठ १७, ४; १८, १५;२०,१३[२];¶; क२६,३;२९, ४; शौ ११,५,१; २०,९२,४†; –†पा ऋ ८,९१, ५; पै ४,२६, ५; –पाय मा ३०, १२; ३४, २, ४; –पे ‡कौ[a] १,५१८; २, २०६; ‡जै[a] १,५३,८; ३, १९, १; पै १७, २९,७[२].

**वैष्टप**[f]– -पम् पै १९,३७,७; –पान् शौ १९, २७,४; पै १०, ७, ४.

**वि√ष्ट(<स्त)भ्**, **म्भ्**, विस्तभ्नाति शौ १३, १, २५[g]; विष्टभ्नात् पै ५, ३८, ८; १८, १७, ५[g]; व्यं(वि-अ)स्तभ्नात् ऋ ६, ८, ३; †व्यं(वि-अ) स्तभ्नाः[h] ऋ ७, ९९,३; क २, ४; ‡व्यष्टभ्नाः काठ २,१०[h].

¶व्यष्टभ्नुवन् काठ २५, ६; क ३९,४.

†वि···तस्तम्भ ऋ १,१६४,६; ७, ८६, ⌊१; ९, १०१, १५⌋; मै ४, १२,५; काठ ४, १६; कौ २, ७३८; जै ४,२६,३; शौ ९, १४, ७; २०, ८८, १; †वि··· तस्तम्भ ऋ ४,५०, १; पै १६, ६६, ६; वि···तस्तभुः ऋ ८, ९४,११.

**वि-ष्टभित, ता**– -तः शौ ११, २, २३; पै १६, १०६, ३; –ते शौ १०,८, २[१].

**वि-ष्टम्भ**[j]– -म्भः ऋ ९, २, ५; ८६, ⌊३५;१०८,१६⌋; ८७,२[k]; ८९, ६[k]; मा १४, ९; का १५, ३, १; तै ३,५, २, २[१]; ४, ३, ५, १; ४,४,१, १[१]; १२, ५†[k]; ५, ३,६, १¶; मै २, ८,२; ३, १६, ४†[k]; ४, १४, ४†; काठ १७, २; ७[१]; २२, १४†[k]; ३७, १७[१]; क २६, १; ६[१]; †कौ २, २८[k]; ३९१; †जै ३, ३, ७[k]; ३१, ११; –म्भाः शौ १३, ४, १०; –म्भाय तै ३, २, ८, १; –म्भेन[l] मा १५, ६; का १६, २, २; मै २, ८, ८.

**वि-ष्टम्भ(न>)नी**[m]– -नी[n] तै ४, ३, ४, २; –नीम्[n] मा १४,५; का १५, १, ५; मै २, ८, १; काठ १७, १; क २५, १०.

**वि√ष्टभाय** (<स्तभ-) वि··· अस्तभायत्[o] खि ३,२२, ३; तै २,३, १४, ६.

**वि-ष्टार**–,**विष्टारिन्**– वि√स्तृ>ष्टृ द्र.

**विष्टि**– √विष्(बधा.) द्र.

**वि-ष्टिर**– वि√स्तृ>ष्टृ द्र.

**विष्टीमिन्**[p]– -मिनम् खि ५, २२, ४;

---

a) विप. (देव-लोक-)।

b) सपा. विष्टपः <> विष्टपि इति पाभे.।

c) °ष्टपः इति मूको. (तु. W.)।

d) सपा. विष्टपि<>विष्टपे इति पाभे.।

e) =विष्टप्-। तेनैव सन्यायं द्र.। पाउ ⌊३, १४५⌋ <√विश् इति, उ. म ⌊मा १८,५१⌋ वि+तप– ⌊=ताप–⌋>बस. इति च।

f) विप. (हविस्– ⌊पै.⌋), नाप. (विष्टप-)। तस्येदमीयः स्वार्थिकश्च अण् प्र.।

g) सपा. विष्टभ्नाति<>विष्टभ्नात् इति पाभे.।

h) पाभे. पृ २९५० *i* द्र.।

i) पाभे. पृ २९५० *j* द्र.।

j) नाप. (आधारभूत-स्तम्भ-)। पपा. नावग्रहः। गस. घञन्तम् वा कर्तरि अजन्तं वा।

k) पाभे. पृ २९५० *l* द्र.।

l) =सपा. विष्टम्भः (तां २, ९, ६ गोब्रा २, २,१३ वैताश्रौ २१, १४ वागृ ९, १४ च) <> विष्टम्भेन इति पाभे.।

m) विप. (इष्टका-)।

n) सपा. °नी <> °नीम् (माश ८,२, १, १० शुप्रा ५,४१ च) इति पाभे.।

o) पाभे. पृ २९५० *n* द्र.। तत्र ?विजातः ⌊खि.⌋ इत्यस्य शोधश्च द्र. (तु. तै.)।

p) विप. (*हृष्ट- =प्रवृद्ध- ⌊ललामगु- =शिश्न-⌋)। (√वृष् 'हर्षे'>) *वृष्ट– ⌊= हृष्ट-⌋>तद्भावे *वृष्टीम– >तद्वति *वृष्टीमिन्–>यनि. (तु. सपा. शांश्रौ १२, २४,१ लाश्रौ ९,१०,६ संहृष्टिन्– इति पर्यायरूपः पाभे.; वैतु. उ. म. प्रभृ. <वि√स्तीम् 'क्लेदने' इति ?)।

मा २३.२९; का २५,६,९; शौ २०,१३६,४.

?विष्टीमेन् शौ २०,१३५,५[a].

वि√ष्टु(<स्तु)> वि-ष्टुति[b]- -तीः मा १९,२८; का २१,२,१७.

वि√ष्टृ वि√स्तृ द्र.

?विष्टो[c] शौ १९,४९,८; पै १४,४,८

विष्ट्यकर्ण- > विष्ट्यकर्णी[d]- -र्ण्यः मै ४,२,९.

?विष्ट्वा √विश् द्र.

विष्ट्वी √विष् (बधा.) द्र.

वि√ष्ठा(<स्था),>ष्ठापि, वितिष्ठते ऋ १, ९२, ५; २, ३८, ५; शौ १९, ५३, ५; पै ४, ३७, १[e]; १२, २, ५; १४, ४, २[f]; वि···तिष्ठते ऋ १, ५८,४; वितिष्ठन्ति पै ९, ११, १०[g]; वितिष्ठन्ते ऋ १०,२५, २; तै ५, २,५,४; पै १९, ३१, ११[g]; †वि (तिष्ठन्ते)[h] ऋ १०,८६, २०; शौ २०,१२६,२; †वितिष्ठसे ऋ ८, ६०, १४; १०,९१,७; मै ४, ११,४; कौ २,३३३; जै ३, २८, ५; ४, ६, ४; वितिष्ठसे ऋ ९, ११०,९; खि ४,२, १; मा ३४, ३२; का ३३,२,१; जै ३,५८,२; शौ १९, ४७, १; पै ६, २०,१; †वितिष्ठे[i] ऋ १०, १२५,७; शौ ४,३०,७; वितिष्ठन्ताम् शौ १४, २, २५[j]; †वि···तिष्ठन्ताम् ऋ ३, १८, २; काठ ३५, १४; क ४८, १३; †वितिष्ठध्वम् ऋ ७, १०४,१८; शौ ८, ४,१८; ११, ११, २६$; पै १६, १०, ८; ¶वितिष्ठेरन् तै २, ५,७,५.

वितस्थे ऋ १, ७२, ९; का १, १०, ५[i,k]; शौ ९, १५, १९[l]; वितष्ठिरे शौ ४,६,२[m]; †वितस्थिरे ऋ ८,७, [८;३६]; मै ४,१२,५; वितस्थिरे मा १६, ६३; ३८, २६[m]; का १७,८, १७; ३८,६, १[m]; तै ४,५,११,२; मै २,९,९; काठ १७,१६; क २७,६; वि··· तस्थिरे पै १९, २३,३; वितष्ठुः पै ५,८,१[m]; वितस्थुः तै ३,२, ६,१[m]; †वितस्थुः ऋ २,३८,७[n]; ७,९१,३; मा २७,२३; का २९, ३,१; मै ४,१४,२; वि···तस्थुः ऋ ५,६९,२; †व्यु(वि-अ)स्थात् ऋ[o] १,६५,४?[p]; २,४,७; ७,३, २; मा १५,६२[o]; का१६,७,५[o]; तै ४, ४,३,३; मै २,८,१४; कौ २,५७०; जै ३,४६,५; काठ १७, १०; क २६,९; पै१४,१,२०$[q];

सस्थ. ?आविषुः>(√विश्>वेशि 'प्रवेशने'>)प्र··· अवीविशुः इति, ?देदिश्यते>(√*त्रिष् [=√त्रस्] 'कम्पने'>) तेत्रिष्यते इति, ?सत्युस्य>सस्युस्य इति, ?अक्षि-भुवः > भक्षि-स्रुवः (*धान्यकोशाग्रय-त्वालाः) इति च शोधाः द्र.।

[a]) =सपा. आश्रौ ८,३,२४ वैताश्रौ ३२,२७। शांश्रौ १२,२३,५ ?विष्ट्वीमे इति पाभे.।

[b]) नाप. [त्रिवृत्स्तोमान्तर्गतानाम् ऋचाम् उच्चारणीयक्रम- (१उद्यती-, २परिवर्तिनी-, ३कुलायिनी-, ४पक्षपच्छिनी- प्रभृ. [तु. तां २, २, १; ३, १; ४, १ लाश्रौ ६, २, २० प्रभृ.])]।

[c]) वि√स्था>वि-ष्ठा->-ष्ठा इति शोधः। 'तमसो विष्ठाः (=निवेशनीति वा विस्तारयित्रीति वा)' इति कृत्वा रात्रिः स्तुता भवति। एवं तावत् पृ १३१० c कृतपूर्वः शोधोऽपि शोध्यः।

[d]) विप. (*भृष्टिप्रतिरूपकलक्षणयुक्तकर्णवत्- [गवादि-पशु-])। भृष्टि- (शूल-) > तत्-प्रतिरूपके *भृष्ट्यकु- + कर्ण- > बस. *भृष्ट्यकु-कर्ण- > *विष्ट्यकु-कर्ण- > यनि. (वैतु. पा [६,२,११२] = *विष्ट्य- [पा ६,३,११५ = विष्ट-? शोधो वा उसं. वा द्र.] + कर्ण-> बस. यनि. इति ?)। स्त्री. ङीष् प्र. उसं. (पा ४,१,५५)।

[e]) पाभे. पृ २८९६ *l* द्र.।

[f]) सपा. शौ १९,४९,२ अभितिष्ठते इति पाभे.; वैतु. सा. RW. प्रभृ. यनि. इतीव।

[g]) सपा. वितिष्ठन्ति<>वितिष्ठन्ते इति पाभे.।

[h]) तु. वें. GW.; वैतु. सा. व्ये(वि-आ√इ)>वि··· एहि इति। तु. पृ १०२५ *a*।

[i]) तु. सस्थ. टि. अनु।

[j]) पाभे. पृ २१२२ *h* द्र.।

[k]) =सपा. तैब्रा ३, ७, ५, ३ काश्रौ २, ८, १४ आश्रौ २, १०, ५ प्रभृ. माश्रौ १,२,६,२५ विचष्टे इति पाभे.।

[l]) सपा. पै १६, ६९, ९ विचष्टे इति पाभे. (तु. शौ. मूको. [तु. W.])।

[m]) पाभे. पृ २४०१ *g* द्र.।

[n]) तु. सस्थ. टि. आ।

[o]) पपा. वि, अ॰ इति ? यनि. शोधः [तु. तै. पपा. प्रभृ.]।

[p]) अभ्यु (भि-अ) स्थात् (<अभि√स्था) इति शोधः।

[q]) सपा. काठ ३९,१ व्यास्थत् इति पाभे.।

१५,२) ९]; १०, ३८, २; मा १९, ६४; का २१, ४, १४; कौ २, १२; १७०; ५८६; जै ३, २, ३; १६,८;४८, २; -य्यस्य ऋ ९, ९७, ५३; कौ २, ४५५; जै ३, ३४, १३; -य्या ऋ ५, ८६, ⌊२ (७,१५,२; ९,१०१, ९)⌋; -य्यान् ऋ ६, ४५,१२; -य्ये ऋ १०, १०२, १.

श्रवि(ष्ठ>)ष्ठा (बप्रा.)[a]- -ष्ठा तै ४,४,१०,२[b]; मै २, १३, २०[b]; काठ ३९,१३[b]; शौ १९,७,४[c]; -ष्ठाः मै २,६,७[d]; काठ १५,६[d]; शौ १९, ४९, २?[e].

श्र(व्य>)व्या- -व्यायै मै ४, २, १; -०व्ये मै ४, २, १.

श्राव[f]- -वः[g] का १९, २,१; तै ४, ७, १, १; मै २, ११, २; काठ १८, ७; क २८,७.

श्रावयृत्- > †श्रावयत्-पति[h]- -तिम् ऋ ५,२५,५; मै ४, ११, १; काठ २,१५.

श्रावयत्-सखि[i]- -खा ऋ ८, ४६,१२.

*श्रुत्- > श्रुत्-कर्ण[j]- -†०र्ण ऋ १, ४४,१३; मा ३३,१५; का ३२, १, १५; कौ १, ५०; जै १, ५, ६; -र्णः ऋ ७,३२, ५; -†र्णम् ऋ १, ४५, ⌊७; १०, १४०, ६⌋; ८, ४५, १७; मा १२, १११; का १३, ७, १०; तै ४, २, ७, ३; मै २, ७, १४; काठ १६, १४; क २५, ५; कौ २, ११७१; -र्णाय[k] काठ ३५, १;१२; क ४८,२; १२; शौ १९, ३,४.

श्रुत, ता[l]- -०त ऋ ६, ३१, ५; १०, १२५, ४; शौ ४, ३०, ४†; -तः ऋ १,५३,९[m]; ५५, ८; २, २०,६; ४, ३०;२; ३२, २१; ६, ५६, ५; ७, ३२,१७; ८, २२, ५; २४, २; २६, ४; ३३, १०; ६२,९; ६७,८; १०, २२, १; २; कौ १, २६३†; ४३८; ४४५; २, १११८; जै १, २८, १†; ८६, २; ९; ३, ३४, २२; ४, २०, ३; शौ १८, १, ३८†[n]; २०, २१, ९; -तम् ऋ १, ६, ६; १०१, ७; ११६, १३[o]; २, ३३, ११; ५, ३९, ३; ५२, १७; ६, ४९, ३; ७, १८,१२[p]; ८, २, २७[q]; १३, १०; ५०,१; ५९, ६; ७१,१४; ९३, १६; १०, ३८, ४; १००, १; खि १, ६, ६; ३, २, १; ४, ८, ४[r]; ५[r,s]; मा १५, ७[t]; का १६, २,३[t]; तै ४, ५, १०,

---

[a]) < *श्रवस्वत्- + इष्ठन् प्र. ।

[b]) व्यप. स्त्री. (नक्षत्र-) । प्र१ निर्विसर्गं रूपम् (वैतु. पपा. प्रभृ. सविसर्गं सद् विजन्तमितीव ?) ।

[c]) व्यप. (नक्षत्र-) । °ष्ठाः इति पाठः? यनि. शोधः । सस्थ. ?कुर्वंताम् > कुर्वाताम् इत्यपि शोधः ।

[d]) विप. (२अप्-) । सपा. मा १०, ४ शविष्ठाः (परि. द्र.) इति, का ११,२,३ शैष्ठाः इति च पाभे. ।

[e]) अरुहन्त श्रविष्ठाः इति पाठः (तु. शंपा. सात.) ? अरुहद्द(द्, उ, श्र) श्रमि(ष्ठ>)ष्ठा इति त्रि-पदः शोधः (तु. ⌊अंशतः⌋ ?श्रमिष्ठा इति मूको., ?श्रविष्ठा इति सा., यनि. इति ?W., अश्रविष्ठा इति सपा. पै १४, ४, २ ⌊तु. पृ ४९८ *l*⌋; वैतु. RW ⌊वैतु. W.⌋ शविष्ठा इति शोधः ?) । '(रात्रिः) विश्वानि गम्भीराणि उ अत्यरुहद्- अश्रमिष्ठा सती ⌊अनायासेनैव⌋ वर्षिष्ठम् (उच्चतमं स्थल-जातम्) उ अरुहद्' इति वा ।

[f]) भाप. । घञन्तेऽन्तोदात्तः । [g]) पाभे. पृ३१४२ *m* द्र. ।

[h]) विप. (*गुर्वाज्ञाकारिन्- ⌊पुत्र-⌋) । बस. पूप. भावे *श्रावया- + भृत्- (*=धृति-, अधिकार-) > बस. श्रावया-भृत्- (प्रयोजितनिजाऽऽज्ञाकृति-) > *श्रावयात्- > यनि. [वैतु. अन्ये शत्रन्तं सत् (तु. सा. PW. प्रभृ.) विलक्षण-स्वरवत् (तु. MVG ⌊२९२,२*b*⌋ ?)] । उप. गुरुजनाऽर्थे (तु. सा.) √*भृध् ⌊=√वृध्⌋ 'वृद्धौ =गुरुभावे' > *भृध्व- > *भृधि- > यनि. (वैतु. सा. प्रभृ. <√पा 'पालने' इति ?) । स्वामिवाचकात् सरूपादन्यच्चैतद् द्र. ।

[i]) विप. [*स्तोतृ-वरद- = भक्तवत्सल- (इन्द्र- ⌊स्तोतॄणां वचांस्यनुरुन्धान-⌋)] । बस. पूप. कृते *h* द्र. । तु. अर्चत्-धूम- प्रभृ. अपि । [j]) विप. । बस. पूप. कर्तरि प्र. ।

[k]) पाभे. पृ ३०२४ *c* द्र. ।

[l]) विप. (प्रख्यात- ⌊इन्द्र- प्रभृ.⌋), नाप. (वेदादि-) ।

[m]) ? MW. श्रुत्- (स्रुत्- = नदी-) > श्रुतः इति ।

[n]) तु. सपा. ऋ ८,२४,२ W. प्रभृ.; वैतु. RW. WI. श्रितः इति ? ।

[o]) तु. वें. PW. GW. प्रभृ.; वैतु. स्क. सा. क्रिप. ।

[p]) सा. व्यप. इति चिन्त्यम् ।

[q]) पाभे. पृ ८१७ *c* द्र. ।

[r]) सपा. खिसा ३१,४ BC च व्रतम् इति ।

[s]) वैतु. ?K. (ऐआ २,७,१ ⌊टि.⌋) श्रुत ⌊सं१⌋ इति ।

[t]) पाभे. पृ १२९६ *m* द्र. ।

४†; मै ४, ८,१; काठ ३०, १; क ४६,४; †कौ १.४९; २०८; २, ५२४; †जै १, ५, ५; २२, ५; ३, ४०, १९; ४, १४, ८; शौ १, १,२[a]; ३[a]; १५,२,२६; १८, १, ४०†; †२०, ५१, ३; ७०, २; १०३, १; पै ३, २८, ३?[b]; १९, ८, १४[c]; ५०, १०; -तस्य ऋ ३, ४६, १; ५, ८५, ५; ६, ४९, १२; ८, २, १३[d]; ९६, ११; तै २, २, १२, ८[d]†; मै ४, १४, १४†; शौ ७, ६३, १; पै १६,१३२,१२; १९,२८, १२; २०, २५,४; -ता ऋ ५, ७४,२; -तात् पै १८,२०,८[e]†; -तानि शौ ७, ६३, २; -ताम् ऋ ५, ६२, ५; शौ ६, ५२,३; पै १९, ७, ६; -ताय ऋ २, १४, ८; ५, ८५,१; ६, ३८,५; ८, ३२, ४; खि ४, १, १; मा १५, ७[f]; १६, ३५; का १६, २, ३[f]; १७, ५, ४; तै ४, ५, ६, २; ७, १, १९,२; मै २, ९, ६; काठ १२. १५†; १७, १४; ४१, १०; क २७, ४; शौ ६. ४१, १[g]; पै १९, १०, १[g]; -तासु ऋ ५, ६०, २; -†ते ऋ ८, ६६, ७; ९, ९७, ५३; कौ १, २७२; २, ४५५; १०४१; जै १, २८, १०; ३, ३४, १३; शौ २०, ९७, १; -तेन शौ १, १, ४[2h]; पै १, ६, ४[2]; १९, २६, ३; २०, ४१, ३.

श्रुत-ऋषि[i]- -षिम्[j] ऋ १०, ४७,३; मै ४,१४,८†.

श्रुत-कक्ष[k]- -‡०क्ष[l] कौ १, ११८; जै १, १३, ४; -क्षः ऋ ८, ९२, २५[l].

श्रुत-रथ[m]- -थाय ऋ ५,३६, ६; -थे ऋ १, १२२, ७.

श्रुतर्य[n]- -र्यम् ऋ १, ११२, ९.

श्रुतर्वन्[o]- -र्वणि ऋ ८, ७४, १३; -र्वणे ऋ १०, ४९, ५; -र्वन् कौ १, ८९‡[p]; जै १, ९, ९‡[p]; -र्वा ऋ ८, ७४,४[p].

श्रुत-विद्[q]- -वित् ऋ ५,४४, १२.

श्रुत-सद्[r]- -सत् तै ३, २, १०,१.

श्रुत-से(ना >) नु[s]- -नाय मा १६, ३५; का १७, ५, ४; तै ४, ५, ६, २; मै २, ९, ६; काठ १७, १४; क २७,४.

†श्रु(त >)ता-मघ[t]- -घम् ऋ ८, ९३, १; कौ १, १२५; २, ८००; जै १, १४, १; ४,२,३; शौ २०, ७, १.

श्रुति- -तिः मा १८, १; का १९, २, १; तै ४, ७, १, १; मै २, ११, २; काठ १८, ७; क २८, ७; शौ ११, ९, २०[u]; -त्यै ऋ १०, १११, ३[v].

†श्रुत्य[w]- -त्यम् ऋ १, ११७,

---

a) पाभे. पृ १४५८ *w* द्र. ।
b) √शृ 'पाके'> शृत->-तम् इति शोधः ।
c) सपा. शौ ५,४,२ श्रुत्वा इति पाभे. ।
d) सपा. कौ २,११५४ सुतस्य इति पाभे. ।
e) सपा. शौ १३,२,४ स्तुतात् इति पाभे. ।
f) पाभे. पृ १२९८ *e* द्र. ।
g) सपा. शौ १०,६,८ श्रोत्राय इति पाभे. ।
h) एकतरत्र सपा. पै २०,४१,३ स्तुतेन इति पाभे. ।
i) विप. (रयि-)। बस. उप. अर्थः ? ।
j) सपा. तैब्रा २,५,६,१ श्रुतर्षिम् इति पाभे. ।
k) व्यप. (ऋषि-) । बस. ।
l) सपा. °कक्ष<>°कक्षः इति पाभे. ।
m) व्यप. (राजन्-) । विप. इति वें. ⌊पञ्चमे मण्डले⌋, ⌊पक्षान्तरे⌋ GW. प्रभृ.? ।
n) व्यप. (ऋषि- ⌊वैतु. वें. विप. इति⌋) । पपा. नावग्रहः । श्रुत-+(√भृ 'धारणे' >भावे) *भृत्य-> *भर्य- > बस. *श्रुत-भर्य- > यनि. (वैतु. स्क. <श्रोतारम् इति, GW.<श्रुत-+अर्य- इति, ORN. ⌊शोधेन⌋ श्रुतरि-> -र्यम् इति?) ।
o) व्यप. (राजन्-) । पपा. नावग्रहः । श्रुत-+(√भृ 'धारणे' > भावे) = *भर्वन्- > बस. *श्रुत-भर्वन्- > यनि. (वैतु. GW. < श्रुत-+अर्वन्- इति, ORN. < श्रुत-+अर्वन्- इति?) ।
p) सपा. °र्वन्<>°र्वा इति पाभे. ।
q) उस. । शिष्टं *k* द्र. ।
r) विप. (आश्विन-ग्रह-) । उस. ।
s) विप. (रुद्र-) । बस. अन्तोदात्तः (पावा ६, २, १९९)।
t) विप. (प्रख्यात-धन- ⌊वृषभ-= इन्द्र-⌋) । बस. ।
u) पाभे. पृ ३१२० *b* द्र. ।
v) 'इन्द्रः किल श्रुत्यै (यशसे *शासनाय वा) अस्य (विश्वस्य) वेद' इति वा. (तु. ⌊अंशतः⌋ वें. सा. GW. GRV.; वैतु. PW. प्रभृ. स्तुति- ⌊मार्ग-?⌋ > -त्यै इति शोधुका इव ?) ।
w) कृत्यः व्यप् प्र. ।

⌊२३; ६, ७२, ५⌋; १६५, ११; २,३०,११; ५, ३०, ५; ७, ५, ९; ८, ४६, १४; १०, ८०,१; मै ४, ११, ३; काठ ९, १८; कौ १, २६५; जै १, २८, ३; -त्यस्य ऋ १, ३६,१२[a]; -त्या ऋ ६,२१,६[b]; ३६,५; -त्यानि ऋ १०, १३८, ६[b].

?श्रुत्यै[c] ऋ २, २, ७; तै २, २, १२, ६†; मै ४, १२, २†.

श्रुत्वा ऋ ६, ५०,५[d]; खि २,१,६; काठ २२, ७¶; क ३५, १¶; शौ ५, ४, २[e]; १२, ४, २७; पै १७, १८, ७.

*श्रुधि[f]->√श्रुधीय > श्रुधीयत्[g]- -यतः ऋ ६,६७, ३; मै ४,१४,१०†.

श्रोतु->श्रोतु-राति[h]- -तिः ऋ १, १२२, ६.

श्रोतृ- -ता ऋ १, १७८, ३; ६, २३, ४; २४, २; -तारः ऋ ५, ६१, १५; -तारम् ऋ ३, २६, २; खि ५, ७, ४, १०.

१श्रोत्र[i]- -त्रम् ऋ १०, ८५, ११[j]; खि २, १२, १; ३, १५, ६; २७; ४,११, ११[k]; मा ४,१५[l]; ६, १४; १५; ३१; ९, २१; १३, ५७[2]; १४, ८; १७; १८, २; २९; १९, ९१; २०, ५; २१, ५१; २२,३३; २५, २[m]; २८, ३८; ३६, १; का ४, ५, ७[l]; ६, ३, ३; ४; ८,२; १०, ४, २; १४, ७, ७; ८; १५,२, २; ५, १; १९, २, २; ९, ३; २१, ६, १२; ७,४; २३, ६,४; २४, २०, १; २७, २,२[m];३०, ४, ४; ३६, १, १; तै १, १,७, २; १०, १; ३, ९, १[2]; ७, ९, २; ८, १४,१; ३, १,८, १;२, १०, २; ३, ५, १; ३; ४,२,१; ४, ३,२,२; ३; ४,३; ६,२; ४, १,३; ७,१, २; १०, २; ५,१, २, ५¶; २, १०, ४¶; ३, ६, २¶; ५, ९, २; ७, २५, १; ६, ४, ९, ४¶; ७, १, १,१¶; ५, १९, २[2]; २५, १¶; मै १, १, ११; २, १६; ३, २;९; ५, २; ९[2]; ९, ५¶; ११, ३; २, ७, १९[2]; ८, २; ३; ११, २; १३, ३; ३, ¶२, ८; ९; ११, ५; ८; ९; ४, १,१४[2]; ५,९¶; ८, ७; ९,३[n]; काठ १, ७;१०; ३, ६; १०; ४, ४; ९, १३; १३, ११; १२[2]; १४, १; १६, १९[2]; १७, १; ३; ७; १८, ७; १२; १९,१०¶; ¶२०, ८;९[2]; २७, ५[2]¶; ३७, १५: १७[2]¶; ३८, ३; ४; ३९, ८; ४०, ५; ४५, ५; १५[2]; क १, ७; १०; २, १३; १७; ३, ३; २५, ९[2]; १०; २६, २; ६; २८, ७; ३०, ८¶; ¶३१, १०; ११[2]; ४२, ५[2]¶; ४७, ६; ४८, ११; शौ २, १७, ५[2]; ५ १०, ८; ११, ७, २५; ९, २५; १०, ४; २६; १२, ६, ३; १९, ५१,१; ५८, १; ६०, १; पै १, ११०,१; २, २९, २; ८२, ४; १०, ११, ९; १३, ९, १२; १६, ८४,४;८५,

a) वैतु. सा. ⌊पक्षे⌋ <श्रुति- इति ?।

b) =यशस्कर-कर्मन्-।

c) पपा. प्रभृ. यनि. इति। *श्रुत्य- (करणे क्यप् प्र. इति कृत्वा नाप. ⌊श्रोत्र-⌋)> -त्यौ इति शोधः द्र.। '*दुरः' (द्वारस्य) वाजं (*कपाटं) न (इव) *श्रुत्यौ (स्त्रौ कर्णौ) अपावृधि (उद्घाटय ⌊अस्माकं स्तोत्रस्य श्रवणार्थम्⌋)' इति वा.। (√वृध् '*आवरणे' > करणे) वृध्य-> ⌊सस्थ.⌋ वाज- (तु. अपि √धा ⌊=*आ √वृध्⌋, पंजा. द्वार + √वधाना 'पिधाने', पार. दर-*वाजह् '*द्वार-कपाट')। d) पदविभागः पृ २२०६ f द्र.।

e) पाभे. पृ ३१४४ c द्र.।

f) भाप. स्त्री. (श्रवणम्)। क्तिन् प्र. उसं. (पा ३,३,९४)।

g) विप. [*श्रावयितुमिच्छु-, श्रुतकर्ण विधित्सु- (स्तोत्र-निरत- ⌊जन-⌋)]। 'यौ (मित्रावरुणौ युवां) श्रुधीयतः (उक्तप्रकारकान् स्वभक्तभूतान्) जनान् महित्वा (त्वरितगत्या) संयतथः' इति वा. (तु. वें. सा. ?GRV. श्रुधि- ⌊√श्रु + कृत्⌋ इत्यंशे; वैतु. PW. GW. ORN. प्रभृ. √श्रु >⌊लोटि मपु१⌋ श्रुधि>श्रुधि- > यनि. इतीव, PG. ⌊३,१७⌋<श्रुरुध्- + क्यच् इतीव ?)।

h) विप. (श्रवणीयदान- ⌊सिन्धु-⌋)। बस. पूप. कर्मणि तुन् प्र.।

i) भाप. च नाप. (श्रवण-, श्रवण-साधन- ⌊कर्ण-⌋)। भावे करणे च त्रन् प्र.।

j) =श्रोत्रे इति सा. (तु. सपा. शौ १४,१,११ श्रोत्रे इति पाभे.)। k) श्रोत्रम् इति स्वरः ?।

l) =सपा. माश ३,२,२,२३ तैआ २,५,३ मं १,६,३४। शौ ६,५३,२ असुः इति पाभे.।

m) सपा. मै ३,१५,१ श्रोत्रे इति पाभे.।

n) पाभे. पृ २०५९ g द्र.।

४; ८७, ६; १४१, ३; १५५, ५;२०,५३,९; –त्रस्य मै १,९, ५¶; ४, ९,१०; काठ ९, १३; –त्राणि मै ४, ५, ६¶; –त्रात् ऋ १०,९०,१४; मा३१,१२‡[a]; १३†; का ३५,१,१२‡[a]; १३†; मै २, १३,३; काठ ३९, ८; शौ १९, ६, ८†; –त्राभ्याम् मा २५, २; का २७, २, २; तै ३, २,३, ४¶; मै ३, १५,१; काठ ४३, ६[b]; शौ ११, ४, २[2]; पै १६, ५५, ४; ५६, ४; ५७, ४; –त्राय मा ७, २७; २२, २३; २४, २९; ३९, ३[2]; का ९, १, २; २४, ९, १; २६, ६, ४; ३९, २, १[2]; तै ३, २, ३, २; ४, ४, १, ३; मै १, ९, ५¶; ३, १२, ९; १४, ८; काठ ९, १३¶; १७, ७; २६, १२;३७, १७; ५१, ६; क २६, ६; शौ ६, १०, १; १०, ६,८[c]; १९, २४, ३[d]; पै १५, ५, १०; –त्रे मै ३, १५, १[e]; शौ ११, ३,२; १४, १, ११‡[f]; १९, २४, ३; पै १५, ५, १०; १६, ५३, २; ७२,८;१३९,२;१८,१,११‡[f]; –त्रेण तै ६, ४,९, ४¶; शौ २, ३५, ५; १०, ७, ३९; १३,१, १३; १८, २, ५९[g]; १९, ५८, ५; पै २, ३९, ४; १८,१६,३.

श्रौ(त्र>)त्री[h]– -त्री मा १३, ५७; का १४, ७,७; तै ४ ३, २, २; मै २, ७, १९; काठ १६, १९; क २५, ९.

श्रोत्र-दा– -दाः मै २, १३, १६; काठ ३९, ९.

श्रोत्र-पा[i]– -पाः मा २०, ३४; का २२, ३, ३; तै ३, २, १०, २; मै १, ३, ९; ५, २; ९; ४, १, १४; –पाभ्याम् तै ३, २ १०, १.

¶श्रोत्र-व(त्>)ती– -तीः काठ २०, ९; क ३१, ११.

२श्रोत्र[j]– > श्रोत्रिय[k]– -यः काठ २८, ४¶[l]; ¶क ३६, १; ४४, ४[l]; शौ ९,८,७; पै १६,११३, १०; –यम् मै ४, ५, ८¶; शौ १०, २, २०; २१; पै १६, ६१, ५; ६; –यस्य ¶मै ४,२, १३;५, ८; –¶याय काठ २८, ४[m]; ५[2]; क ४४, ४[m]; ५[2].

शृङ्ग[n]– -ङ्गः पै २, ३२, २; ४, १४, ५?;१९,३६,१५?; –ङ्गम् ऋ ५, ५९, ३; ८, ८६, ५; खि ५, १५, ३; मै ३,८, १[o];२; ¶काठ २५, १[2][o]; २७, २[2]¶; क ३८, ४[2]; ४२, २[2]; शौ २०, १२९, १०; –ङ्गा ऋ १, १४०, ६; २, ३९, ३; ४,५८,३; मा १७, ९१; का १९, १, ५; मै १, ६, २; काठ ४०, ७; पै ८,१३, ३; –ङ्गाणि ऋ १, १६३, ११; ३, ८, १०; ९, १५, ४; मा २९, २२†; का ३१, ३, ११†; तै ४, ६, ७, ४†; ¶७, ५,१, १[2];२, १[2]; २[2]; काठ ३३, १[4]¶; ४६, ३†; कौ २,६२१†; जै ३, ५०, ८†; शौ ८, ६, १४; पै १६, ८०, ६; –ङ्गात् शौ ४, ६, ५; पै ५, ८, ४; ११, २,४; –ङ्गाभ्याम् शौ ९,४,१७; १९, ३६, २; पै २, २७, २; १६, २५,७; १९, ३७, १३; –ङ्गे ऋ ५, २, ९; ८, ६०, १३; ९, ५, २; ७०, ७; ८७, ७; तै १,२,१४, ७†; ६, २, ८, ४¶; मै २, ५, ९¶; काठ २, १५†; जै ४, ६, ३†; शौ २, ३२, ६; ८,३, २४†; २५; ९, १२, १; १०, ९, १४; २०,१३०,१३[p]; पै २, १४, ४; १६, ८, ३†; ६;९९, ७; १३७, ३; १३९, १; १७, २९, ९; –ङ्गेभिः मै ४, २, ५; कौ २, १००६; जै ४,१७,११†.

---

[a]) पाभे. पृ २२३१ *d* द्र.। [b]) पाभे. पृ१०९६ *c* द्र.।
[c]) पाभे. पृ ३१४४ *g* द्र.।
[d]) सपा. श्रोत्राय <> क्षत्राय (पृ ११८६ *f* द्र.)<>हिगृ १,४,८ पोषाय, राष्ट्राय इति पाभे.।
[e]) पाभे. पृ३१४५ *m* द्र.। [f]) पाभे. पृ३१४५ *j* द्र.।
[g]) सपा. शौ १८,२,६० क्षत्रेण इति पाभे.।
[h]) विप. (शरद्-)। तस्येदमीयः अण् प्र.।
[i]) विप. [अग्नि-,ग्रह-]। उस. उप.<√पा 'रक्षणे'।
[j]) नाप. (छन्दस्- [वेद-])। कर्मणि प्र. (वैतु. पाप्र. [तु. K.] <छन्दस्- इतीव)।
[k]) विप., नाप. (छन्दोऽधीतिन्-)। घन् प्र. (पा ५,२, ८४)। [l]) पाभे. पृ ३१४२ *h* द्र.।
[m]) पाभे. पृ ३१४२ *i* द्र.।
[n]) नाप. [विषाण- (ज्वाला- [तु. निघ १,१७], रश्मि-, शिखर- प्रमृ.)]। व्यु.?। <√शृ [=√श्रि] 'आश्रये' वा 'हिंसायां' वा [तु. पाउ १, १२६], √शम् वा, √शृ 'रक्षणे, शरणे' + [उद्] √गम् वा, शिरस्- + [निर्] √गम् वेति या (२, ७ [SEY ९२, ९९]) प्रमृ.।
[o]) सपा. तै ६,२,३,१ अनीकम् इति पाभे.।
[p]) तु. RW.। शंपा. खि [५,१५,८] च शुङ्गे इति पाभे.।

शृङ्ग-वत्- -वत् पै ५,९, ४.
†शृङ्ग-वृष्[a]- -०वृषः[b] (नपात्) ऋ ८, १७,१३; कौ २, ७७; जै ३, ८,३; शौ २०, ५, ७.
शृङ्गा(ङ्ग-अ)भिहि(त>)ता[c]- -तया मै ३, ७, ६.
†शृङ्गिन्- -ङ्गिणः ऋ १, ३२, १५; मै ४, १४, १३; पै १३,६,१५; -ङ्गिणम् ऋ १, ३३, १२; -ङ्गिणाम् ऋ ३, ८,१०.
शृङ्गिणी- -णीः काठ ३३,१¶.
शृङ्गौ(ङ्ग-ओ)प(श>)शा[d]- -शाः पै २, ३३, ५.
शृणती-, शृणान- √शृ (बधा.) द्र.
शृण्वत्-, °ती- √शृ (श्रवणे) द्र.
शृण्वम् पै ४, १४, १.
शृण्वान- √शृ (श्रवणे) द्र.
शृत- √शृ (पाके) द्र.
√शृधू, (बधा.) शर्धते पै १९, ५१, ११; शर्धत् ऋ ७, २१, ५; शर्धताम् पै १९, ५१, ११; †शर्ध ऋ ५, २८, ३; मा ३३, १२; का ३२, १, १२; मै ४, ११, १; काठ २, १५; शौ ७, ७७, १०; पै २०,८,७.
शर्धय, शर्धयः[e] पै १९, ५१, ११.
†शर्ध[f]- -र्धम् ऋ १,७१,८;१२२, १२; २, ३०,११; ५, ५३,१०; ५६, ९; ८, ९३, १६; मा ३३, ११; का ३२, १, ११; तै १, ३, १४, ६; मै ४, १४, १५; कौ १, २०८; जै १, २२, ५; -र्धम्ऽ-र्धम् ऋ ५, ५३, ११; -र्धस्य ऋ ७, ५६, ८; -र्धान् ऋ ८, ७, २१; -र्धाय ऋ १, ३७, ४; ६४, १; १११,२; ४, ३, ८; ५, ५४, १; ८७,१; ६, ४८, १२; ६६, ११; ८, २०, ९; ९, ३०, ६; १०४,३;१०५, ३; १०, ६१, २५; १४७, ५; कौ १, ४६२; २, ४५०; ५०९; जै १, ४८,८; ३, ३४, ८;४०, ५; -र्धेन ऋ २, ३१, ३.
†शर्ध-नीति[g]- -तिः ऋ ३,३४, ३; मा ३३. २६; का ३२, २, ९; शौ २०, ११, ३.
†शर्धः[h] ऋ १,३७, [१; ५];१०६, १; १२७, ६; १३३, ३; १३९, १; २, १, ५; ६; ३, ३; ११, १४; ३, १९, ४; ३२, ४; ४, १, १२; ६, १०; ५, ३३, ५; ४२, १५; ४६, २[i]; ५; ५२, ८; ५४, ६; ६, ३, ८; ८, ७; ४८, १५; ६८, [(३३, ५) ८]; ७, ४४, ५; ५९, ७; ८, १५, ९; ९, ८८,७;९०, [५;९७,४२]; १०, १०३, ९; मा १७, ४१; ३३, ४८; का १८, ४, ९; ३२, ४, ५; तै १, ३, १४, १; २, ४, ७, १$; ४. ३, १३, ६; ६, ४, ३; ७, १५, ४$; मै २,१०, ४; ३, १६, ५$; ४, १०, ५; काठ ११, १३$; १२, १४; १८, ५; २१, १३; २२,१५$; क २८, ५; कौ १, ४६१; २, ६०४; ८२३; ९९७; १२०७; जै १, ४८, ७; ३, ४९, ३; ४, ४, ४; शौ ४, २७, ७$; १५, १४,१$; १९, १३, १०; २०, १०६, ३; पै ४, १२, ३[j]; २८, १; ३५, ७$; ७, ४,१०; १२, ७, ८$.
†शर्धत्- -र्धतः ऋ २, २३, १२; ६, २३, २; ४२, ४; ७, १८, १८; ३२, ७; ८, ६०, [(६, १९, ८)१२]; १०, ६९, १२; काठ ४, १६; कौ २, ७९३; -र्धताम् ऋ ८, १९, २०; मा १५, ४०; का १६, ५,२२; कौ २,९१०; जै ३,५६,१७; -र्धते

---

[a]) नाप. (*कार्यजगदादिकारण-, प्रजापति- [आदित्य-पितामह-])। शृङ्ग- (*=शुङ्ग- [छां ६,८,३]; वैतु. सा. [पक्षे] = रश्मि- इति?) + वृष्- < कर्तरि (√वृष् 'प्रादुर्भावने' [वैतु. वें., सा [पक्षे] 'वर्षणे'] > उस. यनि. (वैतु. वें. सा. = आदित्य- इति, सा. [पक्षे] PW. प्रमृ. व्यप. [ऋषि-] इति च?)।

[b]) इन्द्र एवं संबोध्यते। प्रजापतेरदितिः। अदितेरिन्द्र इत्यभिसन्धिः (तु. सस्थ. इन्द्रजनितमघजनितवृष्टिजन्यत्वात् सोमस्येन्द्रप्रणपाद्भावेन परामर्शः)। पराङ्गवद्भावाद् निघातः (पा २,१,२)।

[c]) विप. (शृङ्गाश्रितरज्जुबन्धनवती-[सोमक्रयणी- गो-])। सस. उप. <अभि √धा 'बन्धने'।

[d]) विप. (गो-)। बस.। [e]) °यत् इति BKA. शोधः?।

[f]) विप., नाप. (बल-, सैन्य-)। विप. पक्षे कर्तरि अच् प्र. वृषाद्युदात्तत्वं च, अन्यत्र भावे घञ् प्र.।

[g]) विप. (*शर्धस्वद्-नीति-युक्त- [इन्द्र-])। शर्धस्- + नीति- > बस. *शर्धस्-नीति- > यनि. इति मतम् (वैतु. पपा. प्रमृ. शर्ध- इति पूप. इतीव?)। सस्थ. वर्पणीति- द्र.।

[h]) शर्ध- इत्यस्य वा शर्धस्- इत्यस्य वा रूपम्।

[i]) वैतु. GW. सं१ इति (तु. पृ २४६० *a*)।

[j]) पाभे. पृ १९९४ *h* द्र.।

ऋ २, १२, १०; ६, २४,८;८, २, १५; कौ २, ११५६; शौ २०, ३४, १०; पै १३, ७,१०; -र्धन् ऋ ८, ४३, ⌊३२; ९, १००, ८⌋; -र्धन्तः ऋ ७,३४, १८; -र्धन्तम् ऋ २, ३०, ८; ५, ५६, १; ७, १८,५;१६.

शृर्धमान- -नः मा २०, ३८; का २२, ४,३; मै ३, ११,१; काठ ३८, ६.

†शृर्धस्[a]- -र्धांसि ऋ ५, ८७, ७; ८, ७४, १३; १०, ९१, ७; मै ४, ११,४; कौ २, ३३३; जै ३, २८, ५.

शृर्धस्-तर- -रः ऋ १, १२२, १०.

शृर्ध्य- -र्ध्यम् ऋ १, ११९, ५.

†शृध्या[b]- -ध्याम् ऋ २, १२,१०; शौ २०, ३४, १०; पै १३, ७, १०.

√शृ √शृ (बधा.) द्र.

शेतु पै २०, ४१, ६.

शेप[c]- -पः ऋ ९, ११२, ४; मा १९, ८८; का २१, ६, ९; तै ७, ५, २५, २¶; मै ३, ११,९[d]; १५, ९[e]; काठ ३८,३; -पम् ऋ १०, ८५, ३७[f]; -पाय तै ७, ३, १६,२; काठ ४३, ६; -पेन मा २५, ७; का २७, ७, १; तै ५, ७, १५, १; काठ ५३, ५.

शेप-हर्ष(ण >)णी[g]- -णीम् शौ ४, ४, १; पै ४, ५, १.

शेपस्[h]- -पः शौ ४,३७,७;५,२५,१[i]; ६,७२,१[i,j]; १०१, १; १३८, ५[i]; ७, ९५, ३; ९, १२,१३; ११, ७, १२[k]; १४, २, ३८‡[f]; पै १३,४, ९; १६, १३९, १६; १५४,२; १८, १०, ९‡[f]; १९, १३,१०; २७,१४; २०, २९,३.

शेपा[l] ऋ १०,१०५,२.

शेप्या[m]- -प्याम् पै २०, २४,२?[n].

शेप्या-वत्[o]- -वते शौ ७, ११८,

a) =शृर्ध- (तु. निघ २,९)। भावे कर्तरि च असुन् प्र.।

b) भाप. (प्रसहन-)। उदात्तः क्यप् प्र. उसं. (पा ३, ३,९९)।

c) नाप. (मेढ्र-)। (√क्षर् 'क्षरणे' > भावे) *क्षर्य- > *क्षर्य-अ- (क्षरण-साधन-) > यनि. [वैतु. या ⌊३,२१⌋ प्रभृ. <√शप् 'स्पर्शने', दे. ⌊३,२९⌋ <√सप् 'समवाये', उ. म. <√शि 'निशाने' (तु. SEY ⌊९२⌋ WAG ⌊१, १०२ *c*; २३० *b*⌋ प्रमृ. Lat. *Cippus* ⌊=इषु-⌋ इत्यनेन तुलयन्तः), MW ⌊तु. WW १, ३६४⌋ <√शी ⌊<√श्वि⌋ 'वृद्धौ'?)।

d) पेशः इति पपा.?। e) शेषः इति पाठः? यनि. शोधः (तु. पपा., सा. मा २५,७)।

f) =सपा. आमं १,११,६ पागृ १,४,१६ कागृ २५, २२ हिगृ १,२०,२ या ३,२१। शौ १४,२,३८ शेपः इति, आग्निगृ १,५,३:१२ प्रभृ. शेफम् इति पाभे.।

g) विप. (ओषधि-)। उस. उप. करणे कृत्.। पपा. सा. °पोह° ⌊°पः-ह°⌋ इति पाठः, स च प्राक्तरप्रामाण्ययुक्तः संभाव्यते। उत्तरकालिकैः लेखकैरेव छन्दोऽनुरोधात् पूप. परिवर्तनमभिरचितमिति सुवचम्। h) =शेप-।

i) वैतु. PW. <शेप- इति?। j) पाभे. पृ २५०७ *p* द्र.।

k) भाप. (क्षपण- ⌊तु. शितिङ्ग- इत्यत्र सस्थ. टि.⌋)।

l) विप. (*दुर्दान्त- ⌊इन्द्रहरि-⌋)। *शृध्य-वृष्- > (*शृर्ध-पस्- >) शेऽ॒पस्- > ⌊द्वि२⌋ -पसा इति शोधः। सस्थ. ?यस्य > यः च इति, ?वेः > (√*वय् ⌊=√वह्⌋ 'वहने' > कर्तरि *वयस्- > प्र१) *वयाः इति, ?अर्वन्ता > -न्तौ इति, ?दुन् > (√दम् 'दमने' > लेटि प्रपु१) दमत् इति चापि शोधाः। 'यः चँ पतिः *वयाः (सन्) *शेपसा (सन्तावपि) हरी (√रज् 'रञ्जने' > कर्तरि *रजिन्- ⌊लीलावत्-⌋> प्र१) रजी न (इव ⌊सन्⌋) *दमत्' इति वा। १२ × ८×१२ इतीह छन्दोयुक्तिः द्र. (वैतु. पपा. प्रभृ. यनि. शेप-> -पा इतीव, शेप- इति च <√स्पृश् इति कृत्वा वें. =स्पृशत्- इति, सा. GRV. =मेढ्र- इति, GRV ⌊पक्षान्तरे⌋ = पुच्छ- इति ⌊तु. ऋ ८, १, २५⌋, ORN. *तनु-शेप- > -पा इति शोध इति च?)।

m) *भाप. (*वृषकर्मेच्छा-)। *वृषसम(य>)या- > *शेप्याय > भावे *शेमया- > यनि. > √*शेप्याय > भावे *शेप्यया- > यनि. (वैतु. अन्ये शेप- ⌊=मेढ्र- *वा पुच्छ- वा⌋ + स्वार्थे वा ⌊तु. MW.⌋, आवरणार्थे वा ⌊तु. कौसू ४८, ३२ इत्यत्र दारिलः⌋ तद्धितः प्र. इति?)।

n) शेप्यायाम् इति शोधः। सस्थ. ?परावतः> परा वृतः (प१), ?विश्वस्य>वृषस्य इति चापि शोधौ।

o) शेप्यायावते इति शोधः। विप. (*समागम-काम- ⌊परामृष्टपुरुष-⌋)। सस्थ. ?असो > असत् उ इत्यपि शोधः (वैतु. पपा. प्रभृ. यनि.?)। 'हे तृष्टिके (ओषधे) अमूं (परावृतमिव सतीम् अकामिनीम्) उच्छिन्धि (अपगतकामौदासीन्यां कुरु), यथाऽमुष्मै

१; पै २०, १६, १.

**शेरभँ**[a]– -०भ शौ २, २४, १; पै २, ४२, १[b].

**शेरभक**[c]– -०क शौ २, २४, १; पै २, ४२, १[d].

**शेव, वा**(बप्रा.)[e]– -वः ऋ १,६९,२; ७३,२; मै २, १३, १०[f]; -वम् ऋ १, ५८, ६; ३, ७, ५; ५. ६४, २; १०, ११३, ५; १२२, १; १२४, ३; -वस्य ऋ १०, २०,७; -वा[g] शौ ८, ९, २२[f]; पै १६, १९, १०.

**शेव-धि**[h]– -धिः शौ ७, ५५, ५; १२, ४,१४; पै १, ६१,४; १७, १७, ४; -धिभ्यः शौ ९, ३, १५; पै १६, ४०, ६; -धिम् ऋ २, १३, ६; मा १८, ५९; का २०, ४, २; तै ५, ७,७,१; काठ ४०,१३; शौ ५, २२,१४; ६, १२३, १; १२, ३, ४६; पै ३, ३६, ४; १३, १, १२; १७, ४०, ६; -धौ पै ६,१५,४.

†**शेवधि-पा**- -पाः ऋ ८,५१,९; खि३,३,९; मा३३,८२; का३२, ६,१३; कौ२,९५९; जै४,१९,१.

**शेव्य**[i]– -व्यः ऋ १, १५६, १.

?**शेवधिम्** एतं[j] पै ५, ४०, ६.

***शेवन्**[k]– -?व[l] ऋ ९, ८२, ४.

**शेवल**[m]– -लम् शौ १,११, ४; पै १, ५, ४; ९, २२, २१[n].

?**शेवलताम्** पै ६, १४, ४.

**शेवार**[o]– -रे ऋ ८, १, २२.

**शे-वृध्**[p]– -वृधः ऋ ५, ८७, ४.

---

शेप्यायावते असौ ( स्त्री ) *कृतद्-तृष्टा ( *उद्बुद्ध-कामा ⌊पृ ११५७ *a* नेष्टम्⌋) उ ( एव ) असत्' इति वा. ।

[a]) व्यु. *c* द्र. । पाठः ? शेरभक इति शोधः (तु. छन्दः) । [b]) षेरशभ इति मूको. ।

[c]) विप. (*सिंह-यातु- =सिंहाऽऽकृति-छलिन्-⌊किमीदिन्- =यातुधान-⌋) । * शेर्- (सिंह-) + (√भृ ⌊= √वृ⌋ 'आवरणे' > ⌊कर्मकर्तरि⌋ * भर्क ⌊=आवृत-⌋ >) *भक्- > (कस. उसं. ⌊पा २,२,३१⌋) *शेर-भक्- । पपा. नावग्रहः (वैतु. सा. < शेरभ- इति ?) ।

[d]) शरभक इति मूको. । [e]) भाप. (सुख- ⌊तु. निघ ३,६⌋, प्रीति- प्रभृ.), विप. (प्रीतिमत्-, *ऐश्वर्यवत्-प्रभृ.), नाप. (*स्तोत्र-, धन- प्रभृ.) । < √ *शेव् 'ऐश्वर्य-धन-प्रीति-सुख-स्तुतिप्रभृतिषु' ( वैतु. या ⌊१०,१७⌋ प्रभृ. <√शिष् 'शेषे' इति, पाउ ⌊१,१५२⌋ <√शी 'स्वप्ने' इति च ?) ।

[f]) सपा. शेवः <> शेवा इति पाभे. ।

[g]) विप. (प्रीतिमती- ⌊? अदिति-रूपा-गो-⌋) ।

[h]) नाप. (समूढ-धन-, कोश-) । षस. उप. भाप. सत् < √धा '*समूहे' ।

[i]) विप. (सुखकर-मित्र-) । तत्रसाधवीयः यत् प्र. ।

[j]) शेवधिं तम् इति शोधः ।

[k]) नाप. =शेव- ⌊स्तोत्र-⌋ ।

[l]) शेवनि इति शोधः । शेवमंहसे इति * °नि मं° > *°नि अ° > °न्य° > ⌊लैवि.⌋ यनि. ( तु. छन्दः; वैतु. पपा. प्रभृ. यनि., वें. सा. PW. प्रभृ. च शेव- > ⌊द्वि१⌋ -वम् इति शोधश्च?) । इह √मंह् इत्यस्य *रमणे वृत्तिः ।

[m]) विप. (*तरल-, क्षरणशील- ⌊जरायु-⌋) । (√*क्षा ⌊= √क्षर्⌋ 'क्षरणे' > भावे) *क्षाय- + मत्वर्थे वलप् प्र. उसं. ( पा ५, २, ११२ ) > *क्षायवल- > यनि. (तु. पंजा. सेबल '*क्लेदे'; वैतु. पाउ ⌊४, ३८⌋ < √शी इति ?) । [n]) शबलम् इति मूको. ।

[o]) *भाप. (प्रसादवृद्धिमत्ता-) । [*प्रशाय-(<*प्रशाध-=प्रसाद- ⌊पंजा. प्रशाद⌋) > *शाय्- ⌊तु. पार. शाद =प्रसाद⌋ > *शै- >] *शे- + (√वृ ⌊=* √भृ⌋ '*वृद्धौ' > भावे) वार- (= भ ⌊भा⌋र-) > बस. यनि. ( तु. पपा. नावग्रहः; वैतु. वें. शेव- + अर- इति कृत्वा ⌊पर्याप्तसुख-⌋ सोम- वा यज्ञस्तोत्र- वेति, सा. ⌊सुखगमक-⌋ यज्ञ- इति च, PW. WAG ⌊१,२४१ a⌋ Brug ⌊१,९८४⌋ GRV. प्रभृ. शेव- + वार- ⌊बस. =शेवधि-⌋ > नैप्र. यनि., ORN. शेव- + मत्वर्थे रप् प्र. इति (तु. WG १२२६), शेवा अरे ⌊अव्य.⌋ इति च ?) ।

[p]) विप. ( *क्षेम-भृत्- ⌊मरुत्-⌋ ) । बस. पूप. <*क्षेम-, उप. च भावे < √वृध् (*= √भृ) 'पोषणे' । सस्थ. ?स चक्रमे > सं-चक्रमो ( म⌊मपु३⌋, उ ) इति, ?अयुक्त > अयुङ्क्त (मपु३) इति, ?त्मना > त्मनः (द्वि३) इति, ?स्वात् > स्वान् (द्वि३) इति, ?जिगाति > जिगात इति, ?नृभिः > नृभ्यः (च३ ) इति शोधाः; *उरु-क्रमस्- (विप. > क्रिवि.) मः इति । '( हे मरुतः ! यूयं) महतः समानस्मात् सदसः ( सधस्थात् ) निः-सं-चक्रम उ । यदा (च तदनु यूयं) रथान् त्मनः ( * रथान् ) स्नुभिः ( * पृषतीभिः ) अधि-अयुङ्क्त, ( तदा यूयं ) नृभ्यः शेवृधः ( सन्तः ) जिगात' इति वा. (तु. सा.; वैतु. वें. GW. प्रभृ. १शे-वृध- > प्र१ इति ?) ।

१शे-वृध(बप्रा.)- -०ध शौ २,२४, २?[a]; पै २, ४२, २?[a]; -धः ऋ १०, ४६,३[b]; -†धम्[c] ऋ १, ५४, ११; मै ४, १४, १८; काठ ३८, ७; -धासः[d] ऋ ३, १६, २.

शेवृध-क[e]- -०क शौ २, २४, २; पै २, ४२, २.

२शे-वृध[f]- -धम् ऋ १०,६१,२०.

शेषण-, शेषस्- √शिष् द्र.

?शै रे च न वा ह्या पै ७, १२, २.

शैलूष[g]- -षम् मा ३०, ६; का ३४, १, ६.

शैशिर- शिशिर- द्र.

शै(ष्ठ>)ष्ठा- -ष्ठाः[h] का ११,२,३[२].

√शो(बधा.)[i]>शा,शि, †शिशीते[j] ऋ १, ५५, १; ५, २, ९; ९, ५; ७, १०४, २०; ९, १५, ४; १०, ५३, ९; तै १, २, १४, ७; काठ २, १५; कौ २, ६२१; जै ३, ५०, ८; शौ ८, ३, २४; ४, २०; पै १६, ८, ३; १०,९; †शिशाति[k] ऋ ८, १५, ७; कौ २, ९९५; शौ २०, १०६,१; शिशीत[l] ऋ ६,३,५; मै ४, १४, १५†; शिशीताम् ऋ १०, १२, ४; शौ १८, १, ३१†; †शिशीहि ऋ १, ४२, ९; ८१, ७; ३, २४, ५; १०, ४२, ३; मै ४, १२, २; ४; जै ४, २४, १०; शौ २०, ५६, ४; ८९, ३; †शिशीहि ऋ ३, १६, ३; ७,१८,२; तै २,२, १२, ६; काठ६,१०; १०,१२; शिशीतम् ऋ १,१२२,३; तै २,१,११,१†; शिशीत, >ता ऋ ८,४०,⌊(१, १०,८) १०; ११⌋; अशिशीत काठ ३९, १; पै १४, १, २०.

†शित,ता- -तः ऋ ८,२३,१३; कौ १,११४; जै १,१२, ८; -ताम् ऋ १,५४,४.

शिशय[m]- -यम् ऋ १०, ४२, ३; शौ २०,८९,३†.

†शिशान- -नः ऋ ८, ६०, १३; ७६, ⌊९; १०, १५३, ४⌋; ९, ५,२; ६९, ३; ७०,७; ८७, ७; १०,८७, १; ३; ६; १०३, १; मा १७, ३३; का १८,४,१; तै १,२,१४, ६; ४, ६, ४, १; मै २,१०,४; काठ १८,५; क २८, ५; कौ २,११९९; जै ४, ६, ३; शौ ८,३,१;३;५; १३,२,३३$; १९, १३, २; २०, ९३, ७; पै ७,४,२; १६,६, १; ३;६; १८, २३,९.

१शोक-, २शोक- √शुच् (दीप्तौ) द्र.

३शोक- √शुच् (संतापे) द्र.

?शोकयाम्[n] पै ३,३७,१.

शोच्-, १शोचत्- √शुच् (दीप्तौ) द्र.

२शोचत्-, शोचन-, शोचन्ती-, शोचमान-,शोचयन्ती-√शुच् (संतापे) द्र.

?शोचानुत् पै ९, २५, ७.

शोचि-, शोचिष्ठ-, शोचिस्- √शुच् (दीप्तौ) द्र.

?शोचीनुत् पै ९,२५,७.

---

a) *=शशछद्मिन्- (किमीदिन्-)। शेरभ- इत्यनेन सन्यायता द्र.।

b) विप. (*दीप्तियुक्त- ⌊अग्नि-⌋)। < क्षेम- (*दीप्ति-) + वृध- ⌊भाप.⌋ > बस.। < शेव-वृध- इति ?GW. प्रभृ.।

c) विप. (क्षेमङ्कर- ⌊द्युम्न-⌋)। शेषं *b* द्र.।

d) विप. [*शक्तिवर्धक- (रै- ⌊*वाज-, बल-⌋)]। सस्थ. नृ- इति मरुत्- इति च पदे *स्तोतृ-परे द्र.।

e) तु. टि. शेरभ-क-।

f) विप. (*दीप्तिमत्- ⌊अग्नि-⌋)। (*श्वर्य- ⌊स्वर्य-⌋ >) *शे- (दीप्ति-) + वृध- (*भृत- ⌊धारक-⌋) > उस. यनि. (वैतु. अन्ये ⌊सामान्येन⌋ = १ शे-वृध- इति ?)। 'यत् (*यथा) शिशुः (अग्निरूपः) ऊर्ध्वा श्रेणिः न (इव) दन् (*दीप्यताम् ⌊तथा⌋) मक्षू (*दीपिनी) माता (अरणिरूपा ⌊तं⌋) स्थिरं शेवृधं सूत (सूते)' इति वा.। सस्थ. अधासु ⌊सप्त३⌋ *<अधा- (समिधा-)।

g) नाप. (नट-)। <√शिल् '*केलौ' [वैतु. अभा. PW. प्रभृ. व्यप. सद् अपत्यार्थे < शिलूष- (व्यप. ⌊ऋषि-⌋ इतीव ?)]।

h) विप. (२अप्-)। शविष्ठा-> नैप्र. यनि. (तु. सपा. मा १०,४[२])। पाभे. पृ ३१४३ *d* द्र.।

i) धा. सृष्टि-पुष्टि-प्रभृतिषु वृत्तिः।

j) पाप्र. ⌊तु. सा. भा. PW. प्रभृ.⌋ शिशीते प्रभृ. ईड्-आगमः उसं. (पा ७, ३,९५), शिशाति प्रभृ. च आत्वम् (पा ६, १, ४५)। मौ. तु. (*शिश्वर- >) √*शिश्वर्य > *शिश्वर्यति > शिशाति इत्यादेः *शिश्वर्यते > शिशीते इत्यादेश्च रूपस्य समृद्धिः।

k) तु. Hirt ⌊२,८५; ९१; ४,१३०⌋ प्रभृ.।

l) प्रपु१। GW. प्रभृ °त इति ?।

m) विप. (*पोषक- ⌊इन्द्र-⌋)। *शिशमय- > यनि.।

n) √शुच् 'शोके' > शोचयान् इति BKA. शोधः।

**शोण**[a]- -†णः ऋ ९, ९७, १३; १०, २०,९; कौ २, १५६; जै ३, १५, ४; -¶णम् काठ ८, ९; क ७,५; -†णा ऋ १, ६, २; ३, ३५,३; मा २३, ६; का २५,३, २; तै ७, ४, २०, १; मै ३, १६, ३; काठ ४४, ९; कौ २, ८१९; जै ३, ५७, ९; शौ २०,२६, ५; ४७, ११; ६९, १०; -णाः ऋ १, १२६, ४;५,३३, ९; -णाय तै ७,३, १८,१; काठ ४३,८.

शोण-कर्ण- -र्णः काठ १५,९¶.

शोणित[b]- -तम् खिसा २९, ४७.

**शोभ-**, ?शोभथ्-, शोभमान-, शोभस्-,शोभसे प्रभृ. √शुभ् द्र.

**शोशुचत्**-, °ती-, शोशुचान, ना- √शुच् (दीप्तौ) द्र.

**शोष-**, शोषित- √शुष् द्र.

**शौचद्रथ-** √शुच् (दीप्तौ) द्र.

**शौचेय-** २शुचि- द्र.

**शौनक-** शुनक- द्र.

**शौरदेवि-** शूर-देव- द्र.

**शौल्बायन-** २शुल्ब- द्र.

**शौष्कल**[c]- -लम् मा ३०, १६; का ३४,३,३.

**शौष्कास्य-** √शुष् द्र.

***श्चम्न**[d]-> √श्रम्न, श्रम्नन्[e] ऋ १,१०४,२.

**√श्चुत्**, श्चोतन्ति ऋ १, ८७, २; ३,१,८;२१,५; तै ४, ३, १३, ८†; †श्चोतन्ति ऋ ३, २१, २; ४; ४,५०,[३;७,१०१, ४]; ८, २, ८; मै ४, १३, ५[३]; काठ १६,२१[३]; जै ४, १६, ९; शौ २०, ८८, ३; अश्चुतत् पै १९, ४४, ३; श्चुतत्[f] पै १९, ४४, २.

? **श्छिरम्**[g] पै १६,१२३,१-४.

**√श्नथ्**[h], > श्नथि, †श्नथत् ऋ ६, ६०, १; तै ४, २, ११, १; ३, १३, ८; मै ४, १०, ५; ११, १; १३, ५; १४, ८; काठ ४, १५; २१, १३; २३, ११; श्नथिहि ऋ १, ६३, ५; †श्नथिष्टम् ऋ ७, ९९, ५; तै ३,२,११,३; मै ४, १२, ५.

श्नथ- > *श्नथय[i]->
√*श्नथय[i],†श्नथयन्त ऋ८,९९, ६; मा ३३,६७; का ३२,५,१३; कौ २,९८८; शौ २०,१०५, २; श्नथयः ऋ १०, ९५, ५.

श्नथन[k]- -नः ऋ २, २१, ४.

श्नथयत्- -यन् ऋ १, ५१, ९; -यन्तम् ऋ ७,८२,६.

श्नथित,ता- -तम् ऋ १,११६,२४; -ता ऋ १०, ९५, ४.

श्नथितृ- -ता ऋ १, ५७, २; १०, ४९,३; शौ २०,१५,२†.

**श्नप्त्र**[l]- -प्त्रे[m] मा ५,२१; का ५,५, ९; काठ २,१०; २५,८[२]; क २, ४; ४०,१.

**श्नुष्टि**[n]- -ष्टिः काठ १२,७¶; शौ ३,

---

a) विप. ( दीप्तिमत्-, रक्तवर्ण- [अश्व-, वृष- प्रभृ.]) । (√शुष् [*= √शुच्] 'दीप्तौ' > *शोष्ण- > यनि. ( वैतु.GW.<√*शु [= √शुच् वा √श्वित्] इति?) ।

b) नाप. (रक्त-) । तदस्यसंजातीयः इतच् प्र. । शो° इति स्वरः ? ।

c) नाप. (आजीव-भेद-)। शुष्क- (*शुष्कमत्स्य-)> *शौष्क- > स्वार्थे यनि. ? ।

d) *भाप. ( छेदन- ) । √व्रश्च् > *व्रश्म्न- (तु. शुम्न- प्रभृ.) > यनि. ।

e) वैतु. वें. सा. <√श्रम् 'हिंसायाम्' इति; PW. GW. प्रभृ. <√शम् इति, स्क., सा. (पक्षे), ORN. PW. MW. च <√श्रम् [<√चम् 'अदने'] इति च ? ।

f) पाभे. वैप ४ पृ २४३३ k द्र. ।

g) श्चिरम् इति BKA. शोधः ? ।

h) धा. वेधने, हिंसायाम् (तु. निघ २,१९) वृत्तिः ।

i) विप. ( श्नथनकर्मीभूता- [स्पृध्- =शत्रु- ]) । *श्नथमय-> यनि. ।

j) आचारे नाधा. । 'ते (*तुभ्यं) मन्यवे (*मन्युमते) विश्वाः स्पृधः श्नथयन्त (श्नथिताः [भग्नाः] स्युः)' इति वा. (तु. वें. 'मन्युवे' इत्यत्र च. [तु. ऋ १,५१,८ प्रभृ. सप्र. √रन्धि इत्येतद्योगे च.]; वैतु. BS. यनि. रूपे कर्मणि यकः स्थाने अयक् इतीव; सा. उ. म. PW. ORN. [मूको. अव्यवस्थयेव] √श्रथ् 'खेदे' > *श्रथयन्त इति पाठ इतीव?) ।

k) विप. (इन्द्र-) । कर्तरि कृत् ।

l) नाप. (ओष्ठ-बन्ध-)। (√अश् 'भोजने' >भावे) अश्न- > *अश्नभृत्- ( मुख- [तु. Eng. snout] ) । *श्नपत्- + (√वृ 'आवरणे' >भावे) *वर- > बस. *श्नपद्वर-> यनि. (वैतु. भा. < √स्नप् वा √स्ना वेति ?) ।

m) पाभे. पृ ३१०१ l द्र. ।

n) नाप. (*कृषि-, [अमृतस्य] *जननी- [कांचिदोषधिमधिकृत्यैवम्])। (√*भ्रूष् 'जन्मनि'>भावे) *भ्रूष्णुष्- > *श्नुष्- > यनि. । सस्थ. ?विराजः> (*विर्- [धान्य-] > षी ) विरुश्च इति द्वि-पदः शोधः [तु. सपा. ऋ १०,१०१,३ ?गिरा > [षी] गिरः इति शोधः

१७, २‡[a]; पै २, २२, १‡[a];
–ष्टिम् काठ ३१, १¶; क ४७, १¶; शौ ८, २, १; पै १६, ३,१.

?श्ने पै २०, २३, १.

?श्न्युप्त्र[b]– -प्त्रे तै १,२,१३,३[c].

†?श्मशा[d]– -शा ऋ १०, १०५, १; कौ १,२२८; जै १, २४,८.

**श्मशान**[e]– -नम् तै ५, २, ८, ५¶; –ने शौ ५,३१,८; १०, १, १८; पै १६,३६,८.

¶श्मशान-चित्[f]– -चित् मै ३, ५,१; –चितः मै ३, २,६; ७; –चितम्[g] तै ५, ४, ११, ३; काठ २१, ४; क ३१, १९; –चिता काठ २१, ४; क ३१, १९.

श्मशान-चिति[f]– -तिम् मै ३. ४, ७[g].

**श्मश्रु**[h]– -श्रु ऋ १०, २३, १?[i]; २६, ७; १४२, ४; शौ ६, ६८, २[j]; पै १९, १७, १५[j]; –श्रुभिः मा २५, १; का २७, १, २; तै ५,७, १२, १; मै ३, १५, १; काठ २५, ९†; ५३, २; क ४०, २¶; कौ १, ३३४‡[i]; जै १, ३५,३‡[i]; –श्रुषु ऋ २, ११, १७; ८, ३३, ६; –श्रूणि ऋ १०, २३,४; मा १९, ९२;२०, ५; का २१, ६, १३; ७, ४; मै २,५,१¶; ३,११, ८; ९; काठ १३,१¶; ३१,१२¶; ३२,६¶; ३८,३;४; कौ ३, ४, ९; जै २, ४,३; शौ ५, १९, १४; २०, ७३,५.

श्मश्रु-ण[k]– -¶णः तै २, १,१,५; ५,५,१,२; काठ १९,८; २४,७; क ३७,८.

?श्मसि[l] ऋ २, ३१,६.

(वैतु. शौ. अपि सा. ⌊मूको. एके⌋, PW. RW. WI. श्रुष्टिः इति पाठ इति ?)] । [a]) सपा. ऋ १०,१०१,३ श्रुष्टिः इति पाभे. । [b]) क्वचिद् मूको. एवम् (तु. WAG ⌊१,१८८⌋ MVG ⌊४९ *b*⌋; वैतु. मैसू. भा. च श्नप्त्रे इत्येव पाठः) । [c]) पाभे. पृ ३१०१ *l* द्र. ।

[d]) विपं. [*वावदूका- (वार्– *=वाणी- ⌊पृ २८२२ *l* निर्दिष्टो जलार्थो नेष्टः⌋)] । √वश् (*= √वच्, √वाश्) 'वचने' > यङि √वश्वश्य > *वश्वशा > यनि., वश्वशा इत्येव शोधश्च (तु. छन्दः) । सस्थ. ? वाताप्याय > वा. (*तर्प्य– > च१) –प्याय इत्यपि द्वि-पदः शोधश्च । शेषं पृ ६०७ *e* द्र. । 'हे वसो ! (मम) *वश्वशा (सती) वाः (*वाग् ⌊अपि⌋) अवाऽरुधत्, हर्यते (कामयमानाय) ते (तदिदं) स्तोत्रं दीर्घं सुतं वा *तर्प्याय (तृप्तये) *भरात्' इत्येवं वा. द्र. (वैतु. नाप. इति कृत्वा वें. =वायु-, स्क ⌊या ५, १२⌋ सा. प्रभृ. =कुल्या-, GW. GRV. ORN. =श्मश्रु- इति । <शु ⌊आशु⌋ वा श्मन्– ⌊शरीर-⌋ वा + √अश् 'व्याप्तौ' इति सा. प्रभृ.; ORN. श्मशारु धत् इति शोध इति च ?) ।

[e]) नाप. (मृतकाऽऽश्रय-) । शर्व– + (√*वश् ⌊=√वस्⌋ 'निवासे' > ⌊अधिकरणे⌋ *वशन्त– > *शन्त–>) *शान्– (तु. पार. ख़ानह् ⌊गृह-⌋) > षस. *शव-सान्–> यनि.[तु. ⌊पूप.⌋ B. ⌊JAOS १३, Xcvii⌋; वैतु. माश ⌊१३, ८,१,१⌋ <शवा ⌊व-अ⌋न्न– ⌊चस.⌋ इति वा श्मशान्न– (श्मश– ⌊= पितॄणाम् अत्तृ-⌋ + अन्न– ⌊चस.⌋) इति वा, या. ⌊३,५⌋ प्रभृ. < श्म-शयन– (श्मन्- ⌊शरीर-⌋ + √शी इति ?]) । पपा. नावग्रहः ।

[f]) तु. यक्र. द्रोणचित्–, °चिति– ।

[g]) सपा. °चितम् <> °चितिम् इति पाभे. ।

[h]) नाप. (मुख-वाल-) । (√अश् '*दीप्तौ 'भोजने' च > करणे) *अश्मश– (मुख-) + वर्म– (छादन-⌊भाप.⌋) > बस. *अश्मश-वर्म– > यनि. (वैतु. या ⌊३,५⌋ प्रभृ. < *श्मन्– ⌊शरीर-⌋ + √श्रि 'श्रयणे' इति, GW. WAG ⌊१, १९७ a⌋ Brug ⌊२, १, २८२⌋ प्रभृ. < श्मशारु– इति?) ।

[i]) श्मश्रुभिः इति शोधः (तु. सपा. कौ ⌊१,३३४⌋ पाभे.; वैतु. सा. BS. यनि. सत् द्वि३ इति, AVM. श्मशारु इति शोध इति च) । सस्थ. ?भूत् > भुवत् (तु. छन्दः, सपा. कौ ⌊१, ३३४⌋ पाभे. च) इति, ? वज्र-दक्षिणम् > °दक्षाय्यणम् (*वज्रेण समुत्साहवत्त्वयुक्तम्) इति, ? रथ्यम् > रथिनम् (*यमिनं, कुशलवाहकम्) इति, ? विवतानाम् > वि-व्रधावन्वनाम् (*विशिष्ट-धावन-मनसाम्) इति च शोधाः (तु. छन्दः) ।

[j]) =सपा. मागृ १, २१, १४ कौसू ५३, १८ । आगृ २,१,१ प्रभृ. केशान् इति पाभे. ।

[k]) विप. (पशु-) । मत्वर्थे नः प्र. (पा ५,२,१००) ।

[l]) इव श्मसि इति पाठः? इव, (√वश् ⌊*= √वच्⌋ 'वचने'>) वश्मसि इत्यध्यक्षरः शोधः (तु. पृ ३०८२ *f*; वैतु. वें. सा. GW. प्रभृ. < उश्मसि ⌊< √वश् 'कान्तौ'⌋ ? । 'इव (*संप्रति) उशिजाम् (*देवानां) शंसं (स्तुतिं) *वश्मसि' इति वा. ।

**?श्मा शानात्**[a] पै ५,३६,७.
**श्या-** √श्यै द्र.
**?श्या कि ल न यो ह्व ना न हं त्व क्ति च** पै ६,१४,७.
¶**श्यापर्ण**[b]– -र्णः काठ २६, ९; क ४१,७; –र्णाय मै ३,२,७; काठ २०,८?[c]; क ३१, १०.
**श्याम,मा**[d]– -मः मा २४, १; २९, ५८; का २६,१,२; ३१, ६,१; तै ¶१,८,८,१; ९, २; १७,१; २,१, ६, २¶; ५, ५, २२, १; मै २, ६, ४¶; ५¶; १३; ३, १३,२; ४,७,८¶; काठ १३,६[२]; ¶१५, ३;४; ९; ४८, १; शौ ८, १, ९; पै १६, १,९; –मम् मा १८,१३; का १९, ५, १; तै ¶२,१,४,३; ६,१; ४,७,५,१; मै २, ११, ५; काठ १८, १०; क २८, १०; शौ ११, ३, ७; पै १६, ५३, १२; –मा मै ४, २, ४; १४¶; शौ १, २४, ४[e]; पै १, २६, ५; –माः मा २४, ७; १४; का २६, २, २; ३, ४; तै ५, ६, १२, १; मै ३, १३, ८; १२; १३; १५; १६; काठ ४९,२; –माय तै ७, ३, १८,१; काठ ४३, ८; –मेन मै ४, २,९¶; शौ ९, ५, ४; पै १६,९७,३.
**श्याम-ललाम**[f]– -माः तै ५,६,१३, १; काठ ४९,३; १०.
**श्याम-शबल**[g]– -लौ तै ५, ७, १९, १; काठ ५३,९.
**श्याम-शितिकण्ठ**[h]– -ण्ठम् काठ १३,६¶.
**१श्यामाक**[i]– -कः काठ ११, १; पै १४, ४, १४[j]; –कम् खि ५, २१,२; शौ २०, १३५, १२[k]; –काः मा १८, १२; का १९, ४, ४; तै २, ३, २, ६¶; ४, ७, ४, २; मै २, २,१३¶;११, ४; काठ ११, १; १८,९; क २८, ९.
**श्यामाक-तण्डुल**– -लैः मै २, २, १३.
¶**२श्यामाकु**[l]– -कः तै २, ३, २, ७; ३, ४; मै २, १, ४; ६, २; काठ १०, २; १५, १; ५; –कम् तै १,८, १, २; १०, १; २,३, २, ६; ७; ३, ४; मै २, १, ४; २, ६; १३; ६, ६; काठ १०,२; ११, १.
**१श्याव**[m]– -वम् ऋ १, ११७, २४; १०, ६५, १२; –वाय ऋ १, ११७, ८.
**श्याव-क**[n]– -कम् ऋ ८, ३, १२; –†के ऋ ८, ४, २; कौ २, ५८२; जै ३, ४७, ८; शौ २०, १२०, २.
**२श्याव, वा**(बप्रा.)[o]– -वः ऋ ८, १९,३७[p]; १०, ३१,११; मै ४, २,१[२]¶; ¶काठ ११,१०;२२,८; क ३५, २¶; शौ ५,५,८?[q]; पै ६, ४, ८?[q]; ८, ६, ५; –वम् ऋ १०, ६८, ११; शौ २०, १६, ११†; –वस्य काठ ११; १०[२]¶; –वा ऋ १,१००,१६[r], २, १०, २; मै ३, ६, ८¶; –वाः ऋ १, ३५, ५; १२६,

---

a) ?तस्याश्मा° > तस्य श्मशाना (द् >)ल् लोष्टमा (म्-आ-) भूतं स्यात् इति पाद-शोधः ( तु. मूको. )। पृ ४८३ सस्थ. अश्मा इति निर्देशो नेष्टः ⌊वैतु. BKA.⌋।
b) व्यप. (ऋषि-)।
c) श्याम° इति पाठः? यनि. शोधः (तु. मै. क.)।
d) विप. (कृष्णवर्ण- ⌊श्वन्-, तूपर- प्रभृ.⌋), नाप. [*कालायस- (तु. मा १८,१३ ⌊सस्थ. अयस्- =*रजत-, लोहु- =*ताम्र-⌋ )]। (√*भृष् 'मले' >) *भृष्य- (मलिन-) + ( √भा 'दीप्तौ' > ) *भाम- ( *वर्ण-, वर्णवत्- ) > तस. *भृष्य-भाम- > यनि. ( वैतु. पाउ ⌊१,१४५⌋ < √श्यै इति )।
e) शा° इति भूयिष्ठाः मूको. RW. WI. प्रभृ. ⌊वैतु. W.⌋।
f) त्रिप. (काल-पुण्ड्र- ⌊तूपर-⌋)। बस.।
g) नाप.( तमस्-,प्रकाश- )। द्वस. अन्तोदात्तः।
h) नाप. (पशु-)। कस. उप. बस.।
i) नाप. (व्रीहि-भेद-)। < √श्यै इति पाउभो ⌊२,२, १४⌋ प्रभृ.।
j) पृ ३०९५ d द्र.।
k) तु. RW.; वैतु. शंपा. सात. श्या° इति स्वरः?।
l) विप. (चरु-)। विकारार्थे अण् प्र. (पा ४,३,१३७)।
m) व्यप. (मनुष्य-)।
n) स्वार्थे कन् प्र.।
o) विप., नाप., व्यप.। < √श्यै ⌊अर्थः?⌋ इति प्रायोवादः ( तु. Brug ⌊२, १,१२५⌋ Hirt ⌊२, १४३; १५२⌋ प्रभृ. )।
p) विप. ( *सुधार्मिक- ⌊त्रसदस्यु-⌋)। पृ २१९८ j उक्तः शोधो नेष्टः।
q) श्राव्य- > -व्यः इति शोधः ( तु. ?श्रावस् इत्यत्र टि.; वैतु. W. प्रभृ. यनि. विप. ⌊अश्व-⌋ इति?)।
r) *नाप. (वडवा- ⌊अश्विनी-⌋ )। ( √अश् 'व्याप्तौ' > भावे ) *अश्या- + ( √वह् 'वहने' > कर्तरि ) *व (ह् >)हा- > उस. *अश्या-वहा- ( जवेन वोढ्री- )> यनि.।

३; ६, ४८, ६![a]; ८,४६, २२; –वाय ऋ ५, ६१, ९[b]; तै ७, ३,१८,१; काठ ४३,८; –वासु ऋ ६, ४८, ६; –वौ शौ ७, १००,१; पै १९, २६, ११.

श्यावी[c]– -वी ऋ ३, ५५, ११; -वीः ऋ ८, ५५, ५; खि ३,७, ५; –वीनाम् ऋ ८, ४६, २२; –वीम् ऋ १, ७१, १.

श्याव-दत्[d]– -दतः शौ ११, ११, १७[e]; –दता शौ ७, ६७,३; पै ९, २२, ८; –¶दति मै ४, १, ९; काठ ३१, ७; क ४७, ७; –¶दन् तै २, ५, १, ७; मै ४, १, ९; काठ ३१,७; क ४७,७.

श्यावा(व-अ)श्व[f]– -०श्व ऋ ५, ५२, १; खि २, ४,२; -श्वः ऋ ५, ८१, ५; शौ १८, ३, १५; –श्वम् शौ ४, २९, ४; ११, २, १८; पै ४, ३८, ५; १६,१०५, ८; –श्वस्य ऋ ८, ३५, [१९-२१]; ३६,[७; ३७,७; ३८,८]; पै ३, २२, ६.

श्यावाश्व-स्तुत– -ताय ऋ ५, ६१, ५.

श्याव्या[g]– -व्याभ्यः ऋ ६,१५, १७.

?श्यावयामसि[h] पै ४, १४,८.

१श्येत, ता[i]– -तः ऋ १, ७१, ४; तै ५, ५, १२,१; मै २,६,५¶; –तम् ऋ ७, ४, ३; –ता तै ५, ५,१२,१.

२श्येत[j]– -तः मा २४, ३; का २६, १,५; तै ५, ६, ११, १; मै २, ५, ९¶; ६, १३; ३, १३, ४; –तासः ऋ ५, ३३, ८.

श्येत-ग्रीव[k]– -वः तै ५, ६,११,१; काठ ४९, १.

श्येत-ललाम[k]– -माः तै ५,६,१४, १; २०, १; काठ ४९, ४.

३श्येत, ता– -तः काठ १३, ४; १५, ४; ९; ४७, २; ४९,१; –ता काठ ४७,२.

श्येता(त-अ)क्ष– -क्षः मा २४, ३; का २६, १, ५; तै ५, ६, ११, १; मै ३, १३, ४; काठ ४९, १.

¶श्येताक्षी– -क्षी काठ २४, १; क ३७, २.

श्येति[l]– -ती[m] तै ५, ५,८,१;२[n].

श्येन[o]– -नः ऋ १, ३२, १४; ३३,

---

a) पपा. ?। ६अ + *श्यावस्– (नाप. [तमस्-]) > बस. *अ-श्यावस्– (पा ६, २, १७२) > [प्र१] –वाः इति शोधः। विप. [निस्तमस्क- (अग्नि- [वैतु. पपा. अनु वें. सा. ORN. WAG [३, ६० b] आ श्यावाः इति पदे इति कृत्वा श्या° इति रात्र्यर्थे नाप. इति ])]।

b) व्यप. (ऋषि-)। c) नाप. (रात्रि-, बडवा-)। स्त्री. ङीन् प्र. उसं. (पा ४,१,७३)।

d) विप. (कृष्ण-दन्त- [रक्षस्- प्रभृ.])। बस.।

e) पाभे. पृ १६३८ h द्र.।

f) विप. [श्यामवर्णाऽश्वयुक्त- (रथ- [शौ ११, २, १८; पै १६,१०५,८])], व्यप. (ऋषि-)। बस.।

g) नाप. [*रात्रि- (तु. [अंशतः] वें. सा.)]। स्वार्थे यत् प्र. उसं. (पावा ५, ४, २५)। 'यम् (अग्निम्) अङ्कूयन्तम् (< √अङ्क् 'लक्षणे = *प्रकाशने') श्याव्याभ्यः (च३ [तमश्छन्नाभ्यो रात्रिभ्यः]) *नमूरम् (दीपङ्करं [सन्तम्]) आऽअनयन्' इति वा। *नमूर–[< √नम् (*= √नभ् '*दीप्तौ' [तु. निघ १,४ नभस्– इति सूर्यपर्यायः])। इह पपा. प्रभृ. अनु पृ ३८५ कृतपूर्वः सस्थ. अमूर–> -रम् इति निर्देशो नेष्टः।

h) च्यावयामसि इति शोधः।

i) विप. (दीप्र- [अग्नि-])। *अश्य–(भाप. [अच्छभाव-, शोभा-]) + *भृत– (धारक-) > उस. *अश्य-भृत–> यनि. (तु. [तात्पर्ये] PW. GW. WAG [२, ३९] प्रभृ.; वैतु. पाउ ३, ९३ < √श्यै इति ?)। सस्थ. तृतीयः पादः सन्न् इत्येतदवसान इति कृत्वा ?आदीम् > आद् इति शोधः। शेषं सस्थ. ?सचा सन् इत्यत्र टि. द्र.।

j) नाप. (श्येतवर्णविशिष्ट-पशु- [अश्वादि-])। *अश्य– [भाप.] + भृत–[भाप.] > बस. अश्य-भृत–> यनि. इति १श्येत– इत्यतो विवेकः (वैतु. PW. GW. प्रभृ. यनि. अप्यन्तोदात्तमित्येव प्रतिपन्नाः ?)। k) विप.। बस.।

l) भाप. (संहति-, संयोजन-)। (√श्यै '*संहनने'> भावे) *श्यायिति– (< *श्याय-भृति–) > यनि.।

m) च१ पूर्वसवर्णदीर्घः (पा ७,१,३९)।

n) च. अर्थेऽपि सत अत्र ईतः प्रगृह्यत्वम् उसं. (पा १,१, १९)। 'वारवन्तीयेन साम्ना परागमनाद् वारितं सन्तमग्निं श्यैतेन साम्ना (द्वारा) प्रजापतिना *संहतयेऽकुरुत' इति वा. (तु. पपा. °ती इति पृथक् पदम्; वैतु. भा. सा. PW. WG [१०९३] MW. K. प्रभृ. १श्येत– > श्येती √कृ 'वशीकरणे' इति च्व्यन्तम् इति ?)।

o) नाप. (हिंस्रपक्षि-भेद-)। (*वृष्य–>) *श्यु–(भाप. [हिंसन-]) + (√मि '*कृतौ' > कर्तरि) *मयन– > उस.

२; ९३, ६; २, ४२, २[a]; ३, ४३, ७; ४, १८,१३;२६,४-७; २७, १; ३; ४; ५, ४४, ११; ४५, ९; ६, २०, ६; ७, ६३, ५; ८, ८२,९; ९,३८, ⌊४;५७, ३; ८६, ३५⌋; ६१,⌊२१; ६५, १९⌋; ६२, ⌊४; ८२, १⌋; ६७, १४; १५; ६८, ६; ७१, ६; ७७, २; ८२,१; ८६, ३५; ९६, ६; १९; १०, ११, ४; ९९, ८; १४४, ५; मा ४, ३४; १८, ५३; २१, ३५; का ४, १०, ५; २०, ३, ३; २३, ४, ७; तै १, २, ९, १; २, ३, १४, २†; ३, २,१,१; ४, ११, १†; ४, ७, १३, १†; ५, ४, ११, १[२]¶; ५, १६, १[b]; मै १, २, ६; २, १२, ३; ३, ४,७¶; ७, ९¶; ११, २; ४, १, १¶; ९, ११; १२, ६†; १४, १८†; काठ २, ७; ४,१६†; १८,१५†; २१, ४¶; २३, १२†; २४, १¶; ७[२];¶; ३४, ३¶; ३७, १४; ४७,६[b]; क २, १; २९,४; ३१, १९¶; ३७, २¶; ८[२]; †कौ १, ४७३; ५६२; २,१६७; २९४; ३५८; ५२७; ६२६; ६६६; १११३; †जै १, ४९,७; ५७, ७; ३, १६, ३; २४,१०; ३०, १; ४१, ३; ५२, ७; ५५, ७; ४, ७, ७; शौ ३, ३,३; ४; ५, ३०,९; ६, ४८,१; ७, ४२, १; २; ९,१२,५; १८,१,२१†; पै २, ७४, ३; ४; ५; ८, १०, ८; ९, १३, ९; १३, ६,१४†; १६, १३९, ६; १९, ४४, ४; २०, ९, १०;१०, १; -नम् ऋ ४, ३८, २; ५; ८, ३४, ९; मा १९, १०; का २१, १,९; तै २, ४, ७, १[c]; ९, १; मै ३, ११, ७; ४, १३, ४†; काठ ११, १३†[c]; १६, २१; २४, ७¶; ३७,१८; क ३७,८¶; -†नस्य ऋ १, ११८, ११; १६३, १[d]; ४, ४०, ३; ५, ७८, ४; १०, १४४,४; मा ९,१५;१९,८६$; २९, १२[d]; का १०, ३,८; २१, ६, ७$; ३१, ३, १[d]; तै १, ७, ८,३; ४, २, ८,१[d]; ६, ७, १[d]; मै १, ११, २; ३, १०, ३¶; ११, ९$; काठ १३,१४; ३८, ३$; ३९, १[d]; पै १५, १२, ४; -ना ऋ ५, ७४, ९; ८, ७३, ४; मै १, ६, २‡[d]; -नाः ऋ ४, ३५, ८; ७, ५६, ३; शौ ११. ११, ९; १२,२४; -नात् शौ ५, २१, ६; -†नान् ऋ १, १६५, २; ६, ४६, १३; मै ४, ११, ३; काठ ९, १८; -नाय ऋ ७, १५, ४; १०, १४४,३; मा ५, १; ६,३२; का ५, १, १; ६, ८, ३; तैं १, २, १०, १; ३, २, ८, १; ६, २, १, ३; मै १, २, ६; ३,३; ३, ७,९; काठ २, ८; ३, १०; २४, ८; ४०, १४†; क २, ३; १७; ३८, १; -नासः ऋ १, ११८, ४; ४, ६, १०; ८, २०, १०; १०, ७७, ५; ९२,६; १२७,५; -ने मा ९, ९; का १०, २, ६; शौ ६, ९२,२; पै १९, ३४,११; -नेन तै ४, २, ६, ४‡[e]; ७, ३, १४, १; काठ ३५, १५¶; ४३, ४; -नेभिः ऋ ८, ५, ७; -नेभ्यः ऋ ४, २६,४; -नौ ऋ ८, ३५, ९; शौ ७, ७३, ३; पै १९, २७, ४.

¶श्येन-चित्[f]- -चितम्[g] तै ५, ४, ११,१; काठ२१,४; क ३१,१९.

श्येन-चिति[f]- -तिम्[g] मै ३,४,७¶.

श्येन-जूत[h]- -तः ऋ ९, ८९, २; जै ४, १९, ८†.

श्येन-पत्वन्[i]- -त्वा ऋ १,११८,१.

श्येन-भृत[h,j]- -०त ऋ ९, ८७,६.

---

*श्य-मयन- > *श्य-अयन- > *श्ययन- > यनि. (वैतु. < सं√श्यै 'गतौ' ⌊गो १,५,१२⌋ इति ⌊तु. पाउ २, ४६⌋, या ⌊४,२४⌋ प्रभृ. <√शंस् 'प्रशंसायाम्' + √इ 'गतौ' इति, SEY ⌊९९⌋ <१श्येत- ⌊श्वेत-⌋ + एन- ⌊कर्बुर-⌋ इति ?)।

[a]) सपा. मा १३,१६ का १४,२,१ तै ४,२,९,१ मै २, १७, १५ काठ १६, १६ माश ७, ४, २, ५ समुद्रः इति पाभे.।

[b]) सपा. मा २४, ३७ का २६,८,२ मै ३, १४, १८ सुपर्णः इति पाभे.।

[c]) श्येनमाग्निनम् (आपश्रौ १९, २५, १८ प्रभृ. च) >सपा. माश्रौ ५, २,६,१९ प्रेतं वाजिनम् इति पाभे.।

[d]) पाभे. पृ २६०५ *m* द्र.।

[e]) पाभे. पृ १३१९ *e* द्र.।

[f]) तु. यक. द्रोण-चित्-, °चिति-।

[g]) सपा. °तम् <> °तिम् इति पाभे.।

[h]) विप. (सोम-)। तृस.।

[i]) विप. (श्येन इव त्वरितगति- ⌊रथ-⌋)। बस. उप.भाप.।

[j]) विप. (सोम-)। तृस.। < वैतु PW. GW. °ना-ऽऽभृत- इति (वैतु. BW. प्रभृ.)।

श्येन-सद्- -सत्, द् तै ४, ४, ७, १; ५, ३, ११, २; मै २, १३, १८; काठ ३९, ९.
श्येना(न-आ)भृत[a]- -तः ऋ १, ८०, २; -तम् ऋ ८, ९५, ३.
श्येनरिष्येन गवः पै १९, ५०, ९.
*श्ये(न>)नी[b]- -नी ऋ १, १४०, ९?[c]; खि ५,१५,५[d]; मै २, ६, ५¶[e]; ३,१०,१¶; ४,२,४; ३, ८; काठ १५,४¶[e]; शौ ६,८३, २[f]; २०,१२९,१९[d]; पै १,२१, ३; १५,२०,६?; -नीः तै ५,६, १३,१; काठ ४९, ३; शौ १८, ४, ३३; ३४[g].
श्यैनेय[h]- -यः मै २, ५, ९; काठ १३, ४[i].
√श्यै >श्या, शी, ¶श्यायति काठ ६, २; क ४, १.

शीत, ता- -तः शौ ५, २२, १०; पै १३, १, १०; -तम् मै ४, ५, ८¶; शौ ५, २२, १३[j]; १८, २, २२; पै १६, ७४, ६[j]; -ताः ऋ १०, ३४, ९; -तान् शौ ८, ९, १७; पै १६, १९,७; -ताभिः मै ३, ७,१०¶; -ताय तै ७, १, १७,१; काठ ४१, ८; शौ १, २५, ४; ७, १२१, १; पै १, ३२, ४; -ते मा २३, २६; २७; का २५, ६, ६; ७; तै ७, ४, १९, २; मै ३, १३, १; काठ ४४, ८; -तेन तै ६, २, २, ७¶.
?शीतजलायत[k] पै ९, ७, १.
शीत-रूर[l]- -रयोः तै २, ५, २, ३[२]¶; -रा? पै १, ४५, ३; -राय पै १, ४५, २; -रे पै १, ४५, १; १६, १५०, ९; १५१, २; ६; -रौ ¶तै २, ५, २, ३; ४.
शीत-ह्र(द>)दा[m]- -दा शौ ६, १०६, ३[n]; पै १९, ३३, ६[n]; -?दो[o] खि ७, ७, १.
?शीतावात पै ९, ७, १.
शीतिका[p]- -का पै ९, ७, ५; -०के ऋ १०, १६, १४; शौ १८, ३, ६०†; पै ९, ७, १५.
†शीतिका-व(त्>)ती[q]- -०ति ऋ १०, १६, १४; शौ १८, ३, ६०.
शीति[r]- -तिम् पै ९, ७, १५.
शीन- -नम्[s] मा २५,९; का २७, ९, १; मै ३, १५, ८.
श्या[t]- श्याम्[s] तै ५, ७, २०, १; काठ ५३, १०.

---

a) विप. (सोम-)। तृस.।

b) विप. (श्वेतवर्णयुक्त- ⌊गो- प्रभृ.⌋), नाप. (श्वेत-गो-प्रभृ.)। *अश्य-( भाप. श्वैत्य- )+ *मयन- ( भाप. ⌊मिति-, भृति-⌋ ) > बस. *अश्य-मयन- >यनि. (वैतु. पा ⌊४,१,३९⌋ श्ये(त>न>)नी- इतीव।

c) पपा. प्रभृ. यनि. ? °नीः इति शोधः द्र। '(रात्रिकाले) पद्वते (यात्रिकजनाय) वयः (*प्रकाशं ⌊<*भूधस्-⌋) दधत् [चिकीर्षुः (हेतौ सत् ⌊पा ३, २,१२६⌋)] श्येनीः (श्वेत-वर्णाभिः) वर्तनीः ( *दीप्तिभिः ) अनु ( कप्र. ⌊सह⌋) सचते' इति वा. (तु. ⌊अल्पांशतः⌋ वें. सा. PG ⌊२,२५१⌋; वैतु. GW. ORN. उषोऽर्थे नाप. इति, GRV. < श्येन- इति ?)।

d) इमे सपा. श्रुती द्र.। पाठः? उभयत्र केशिनी श्ये-न्ये (नी-ए)णी-दृशा इति त्रि-पदः पाद-शोधः (वैतु. RW. शौ. ?श्येनपतीसा ⌊तु. शंपा. सात.⌋ > श्येनपर्णी सा इतीव ?)। *एनी- =*एणी-, हरिणी-।

e) विप. (श्वेतवर्णा- ⌊अपचित्-⌋)।

f) सपा. तै १,८,९,१ कृष्णा इति पाभे.।

g) सपा. तैआ ६,७,१ आग्निग्र ३,८,२:३८ बौपि १,१५:४६ अर्जुनीः इति पाभे.।

h) श्वेततूपरापत्य-। ढक् प्र.।

i) श्ये° इति पाठः? यनि. शोधः (तु. मै.)।

j) पाभे. पृ २६८५ g द्र.।

k) शीतजल उपायत इति BKA. शोधः?।

l) नाप. पुं. न. (शीतोष्णज्वर- ⌊रोग-द्वय-⌋)। इतरेतरयोगे समाहारे च द्वस.।

m) विप. (शीतह्रदवती- ⌊शाला-⌋)।

n) सस्थ. ?अग्निष्कृणोतु > जण्णिष्कृणोस्त्वम् इति त्रि-पदः शोधः। (√जष् '*जलबन्धे, शैत्यातिशये' ⌊तु. जड-, पार. यख, हिम-⌋ >) *जण्णि- (विप. ⌊शाला-⌋)। '°वो ज° > °वोअ° इति वावि. द्र. (वैतु. अन्ये यनि. एव पठन्तः?)।

o) -दा, उ इति छेदः द्र. ⌊तु. शौ.⌋। सस्थ. ?ददातु > दधास् ( < √धा 'कृतौ' ) त्वम् इति द्वि-पदः शोधः।

p) भाप. (तु. शीतिकावती-)। विप. [शीतप्रयोजिका- (पाकदूर्वा- ⌊तु. PW. प्रभृ.; वैतु. GW. नाप. इति?⌋)]। आद्युदात्तः (पा ६,१,१९८)।

q) विप. (शैत्यवती- ⌊पाकदूर्वा-⌋)। r) भाप. (शैत्य-)।

s) परस्परं पाभे.। t) नाप. (अवश्याय-, हिम-)।

**१श्यैत**[a]- -तम् शौ १५, २, २२; ४, ११; १२; -तस्य तै ५,५,८,१¶; शौ १५,२,२४; -ताय शौ १५, २, २३; -¶तेन तै ५, ५, ८, १; २.

श्यैत-त्व- -त्वम् तै ५, ५,८, १¶.

**२श्यैत**[b]- -तम् मै ४, ९, ११.

**श्यैनेय**- श्येनी- द्र.

**श्र**[c]-

श्रेमन्[d]- -म्णे मै २, ५, ८; ४, ७, ६¶.

श्रेयस्- -यः मा १८, ८; का १९, ३, ४; तै १, २, ३, ३; ३, १, १, ४; ४, ७, ३, १; ५, ७,२, ४; ५; मै १, ६,१२¶; २,११, ३; १३, १०; ३, ८, ३¶; ४, २, ६¶; काठ १३, १५; १८, ८; क २८, ८; शौ ५, २०, ९; ७, ९, १; ८, ९, ३२; पै ९, २४, ९; १६, १९, १०; २०, ३, २; -यःऽ-यः शौ १०,६,५; पै १६, ४२, ५; -यसः मा ३, ५८; का ३, ८, २; तै १, ८, ६, २; मै १, १०, ४; ३, १, ३¶; ¶काठ ७, ४; ८, ११; ९, ७$; २७,२[e]; क ७, ८¶; ८, १०; ४२,२¶[e]; -¶यसा तै ५, १, २, २; मै १, ५, ११; काठ १०, १०; -यसि मै ३,७,८¶; -यसे मा ३०, ११; का ३४, २, ३; तै १, ५, ७, ४¶; ¶मै १, ५, ८; ९; ४, १, २; काठ ३१, १¶; ¶क ५,३; ४७, १; -यांसः ऋ ५, ६०, ४; ¶काठ ११, ६; २७, ९; -यांसम् ऋ १०, ३१, २; ¶तै २,४,१,४; ५, १, २, ३; ¶मै ३, १,३; ४, ५; ¶काठ १०,७; २०,६; २१, २; ४; ७; २२, २; १०; २४, ६; ३१, ११[२]; ¶क ३१, १९; ३५, ४; ३७, ७; ४७, ११[२]; शौ २, ११, १-५; १५, १०, २; पै १, ५७,५; -¶यांसम्ऽ-यांसम् काठ ८, ७; क ७, ४; -यान् ऋ ३, ८, ४; ६, ४१, ४; ¶तै १, ५, ९, ५[२]; २, ४, १, ४; २, ३[२]; ५, ५, ६; ७, ४, ५, १; ¶मै १, ४,१२[२]; ६, ४; ८[२]; ३, १, ९;३, २;४, ८; ८, २; ४, ६, ४[२]; १३, १†; ¶काठ १५, १२†; २३,३;२७, ५[२]; ६[२];३४,१३; ¶क ४२,५[२]; ६[२];पै १७, ३४, ६; -¶यान्-ऽयान् काठ ७, ६; क ५. ५; -योभिः काठ १०, १०¶.

श्रेयसी- -॰सि मै ४, २,५; ६; ७[४]; -सीम्[f] शौ १२, २, ४५; पै १७, ३४, ६.

श्रेयः-केत[g]- -तः शौ ५, २०, १०; पै ९, २४, १०.

श्रेयस्-कर- -॰र मा १०, २८; का ११, ८, ५.

श्रेष्ठ,ष्ठा- -ष्ठः ऋ १,४३,५;१६१, १; २, ३३, ३; ३, २१, ⌊३; १०, २४, २⌋; ६, १६, २६; २६,८; १०, १५६, ५; खि ६, ३, २; मा २, २६; का २, ६, ५; तै १, ५, १०, २; ६,६,१; ७, ६, १; ३, १,१, २; १०,२[२]; ४, ८, १¶; मै ४, ३, ४; ६, ५;६[२];¶;१३,५†; काठ ६,८¶; ११,३¶; १६,२१†; २६,११†; ३५, १५¶; ३७, १२¶; क४, ७¶;कौ २,८८१†; पै ५,१६,७; २६, ४; १५, २०, २†; २०, ३३, २; ५३,६; -†ष्ठम् ऋ १, ४४, ४; ११३, ⌊१; १०,१७०, ३⌋; १६४,२६;२,७,१; ३,२१, २; ४, ३६,७;५४, १; ५, ६२, १; ८२, १; ८, ९, १३; १०, २४, २; ३५, ७; ७१, १; ७६, २; खि ५, ५, ४; तै १,३,१४, ३; मै ४, ६, ५¶; ११, ४; १३, ५; काठ १६, २१; ३४, १८; कौ २, ८०५; १०९९; जै ४, ३, १; शौ $६, २१, २; ४४, २; ७, ७७, ७; २०,१४१, ३; पै १, ३८, २$; ९, ४, १२$; $१०, ११, ७; १२, ४; १६, ६८, ४; २०, ११,१;३३, ८$; -ष्ठया ऋ ५, २५,३; -ष्ठा ऋ ४, १, ६; ६, ६८, २; १०, ६३, १६; -ष्ठाः तै ४, ७, १५,

---

a) नाप. (सामन्-)। <√श्यै 'संयोगे' ⌊तु. १श्येत-⌋ इतीत्र तै ५,५,८,१ तां ७,१०,१३-१५ जैमि १,१४८ प्रभृ. (तु. ⌊अंशतः⌋ WG ⌊१०९३⌋; वैतु. सा. < वशीकरणा-र्थकाद् धा. इति ?)।

b) = १श्यैत-।

c) त्रिप.(साधु-)।(√अश्‌'*प्रशंसायाम्'>)*अश्र-> यनि. (तु. अच्छ-, अत्रे. अश- ⌊=ऋत-⌋) । यत्तु पा ५, ३,६० प्रशस्य- > श्र- इतीव, तत्र पर्यायनिर्देशे तात्पर्यं न व्यु. । इमनादिषु प्र. प्रशस्य- इत्यस्य रूपाऽसमृद्धेः, श्र- इत्यस्य च समानेऽर्थे रूपसमृद्धेः।

d) भाप.(श्रेष्ठत्व-)। इमनिच् प्र. उसं. (पा ५,१,१२२)। <श्री-इति MW.।

e) पामे. पृ २७७९ *h* द्र.।

f) सपा. तैब्रा १, २, १, २० आपश्रौ ५, १२, ३ श्रेयसीश्रेयसीः इति पामे.।

g) विप. (श्रेष्ठत्वेप्सु- ⌊दुन्दुभि-⌋)। बस.।

३; मै ३, १६, ५; काठ २२, १५; शौ ४, २५, ७; १८, ४, ८६;८७; पै ४, ३४,७; -ष्ठानि ऋ २, २१, ६; -ष्ठाम् पै १०, ११, ८;१२, २; १६, १५५,५; -†ष्ठे ऋ ६,७१,२;१०,३६,१२; मा ३३,१७; का ३२, १, १७; -ष्ठेन शौ ५, २५, १०-१३; पै १३,२,१०-१४; -ष्ठेभिः ऋ ७, ७७,५; -ष्ठैः ऋ १०,११२,३.

श्रैष्ठ्य- -¶ष्ठ्यम् तै ५, ६, ७, ३; काठ २१, ५[2]; २९,७[2]; ३७, २; क ३१, २०[2]; ४५, ८[2]; पै १,१९,३$[a]; -ष्ठ्यात् तै २, ४, ५, २; -ष्ठ्याय मै १, ४, १४¶; काठ ११, ३[2]¶;२४, ९[3]¶[b]; ३६, १५; क ३८,२[2]¶; शौ १०, ६, ३१; ३२; ३४; पै ३, २३, ४[c]; १६, ४४, ८; ९; १०; -ष्ठ्ये तै ३, ५, ४, २[a]; मै १, ४,३[a]; ८¶;३,७,१०¶[d]; काठ ५, ६[a]; शौ १, ९, ३[a]; -ष्ठ्येन खि ४, १३, ३[e].

?श्रैष्ठ्य-त( म > )मा[f]- -माम् पै ७, ६, ५.

श्रेष्ठ-तम, मा- -मः तै १, ५, १०, २[g]; मै ४, १, १¶; काठ ७, १४; जै १, १२, ९; -¶मम् काठ ३०,१०; क ४६, ८; -मा ऋ १, ११३, १२; शौ ६,१३८,१; पै १,६८,२; -माः ऋ ५, ६१,१; -माय मा १,१; का १, १,१; तै १, १,१,१; मै १, १,१; ४, १,१; काठ १, १; ३०, १०; क १, १; ४६, ८.

श्रेष्ठ-वर्चस्[h]- -र्चसः ऋ ६, ५१, १०; -र्चसा ऋ ५, ६५, २.

†श्रेष्ठ-शोचिस्[h]- -षम् ऋ ८, १९,⌊४ (४४, १३)⌋; कौ २, ७६४.

√श्रंश्, स् > श्रंशयित्वा शौ ४,१६, ७[i].

श्रंसयित्वा पै ५, ३२, ८[i].

√श्रथ्, शिथ्[j], शिश्रथन्तु ऋ ७, ९३, ⌊( १, १७९,५; ५,८५,७ )७⌋.

श्रथ्नीते ऋ ९, ६९,३; अश्रश्नन् ऋ २, २४, ३; श्रथ्नाः ऋ १०, १७१, ३.

श्रथयन्ते ऋ ५, ५९,१[k]; श्रथय शौ १, ११, ३; पै १, ५, ३; श्रथयन्त ऋ ५, ५४,१०; ८५, ४; शिश्रथत् ऋ १, १२८, ६[2]; शिश्रथः ऋ ५, ८५, ⌊७ ( १, १७९, ५; ७, ९३, ७ )⌋; †शिश्रथः ऋ १,२४,१४; तै १, ५, ११, ३; मै ३, १६, ५‡[l]; †४,१०,४; १४,१७; काठ ४०, ११.

शिथिर, रा[m]- -रः मै ¶२, १, ४; २,१३; ४, ६; ३, ५, ३; ४, ८,१०¶; -रम् ¶मै १, ६, ६; ४, ३, ९; ७, ६[3]; ८, ७; शौ १०, २, ३; पै १६, ५९, ३; -†रा ऋ ५, ८५, ८; ७, ४५, २; तै ३, ४, ११, ६; मै १, ६,३¶[n]; १०, १३[o]; ४,१४,३; काठ २३, १२; -राः खि ५,७, ३, २; मै १, १०, १०¶[p]; ४, १३, ८; काठ १९, १३; -राम् ऋ ६,५८,२; मै ४, १४,१६†; -रे ऋ ७, ७१, ५; तै ३, २, ४, ३[q].

शिथिर-तम- -मः मै ४,७,६¶.

शिथिल, ला[m]- -लः तै ७,१,६, १¶; ३, ७, १; काठ १०, २; ११, १; -¶लम् तै ६, ५, १०, ३; ७, १, ५,४; काठ ८, ८; २०, ११; २१, ३; ३७, १२; क ७, ३; ३१, १३; १८; -ला काठ ३६,७¶[o]; -लाः काठ ३६, ५¶[p].

---

a) सपा. श्रैष्ठ्यम् <> श्रैष्ठ्ये इति पाभे.।

b) सपा. श्रैष्ठ्याय <> श्रैष्ठ्ये <> एकतरत्र तै ६, २,२,१ ज्यैष्ठ्याय इति पाभे.। पृ २५० j अपि द्र.।

c) सपा. मा १३,२५ प्रभृ. ज्यैष्ठ्याय इति पाभे.।

d) श्रैष्ठ्ये इति पाठः? यनि. शोधः।

e) सपा. खिसा ३४,३ आपमं १,१२,६ मागृ २,१८,४ श्रेष्ठेन इति पाभे.। f) विप. (शाला-)। श्रेष्ठ-तमा- इति शोधः, यद्वा स्वार्थे ष्यञ् प्र.।

g) =सपा. सांब्रा ३,४,४। कौसू ८९,१३ अध्यक्षः इति, शांगृ ३,७,३ भगवान् इति, पागृ ३,२,७ वीरतमः इति च पाभे.। h) विप.। बस.।

i) सपा. श्रंशयित्वा <> श्रंसयित्वा <> काठ १, १६ स्रंसयित्वा इति पाभे.।

j) √श्रथ् > √श्रथ् > यनि. (तु. WAG ⌊१, १६⌋)। k) तु. सस्थ. टि. अनु।

l) पाभे. पृ २९१३ k द्र.।

m) विप.। यक्र. किर⌊,ल⌋च् प्र. (पाउ १,५३)।

n) सपा. काठ ८,२ आर्द्रेव इति पाभे.।

o) सपा. °रा <> °ला इति पाभे.।

p) सपा. °राः <> °लाः इति पाभे.।

q) =सपा. आपश्रौ १२,२०,४ प्रभृ.। माश्रौ २,३,७,२ अशिथिरे इति पाभे.।

**स-गर्भ**[a]– > **सगर्भ्य**[b]– -र्भ्यः मा ४, २०; ६, ९; का ४, ६, ४; ६, २, ३; तै १, २, ४, २; मै १, २, ४; १५; ४, १३, ४; काठ २, ५; ३, ५; १६, २१; क १, १७; २, १२.

? **सगलिग**[c] पै २०,३६, ९; ४३,३.

? **स गलुन्तो नशिष्यति**[d] शौ ६, ८३, ३.

? **सगासि** पै २०,३५,२.

**स-गु**[e,f]– -गुः काठ ३५, १०; ३८, १४; क ४८, १२.

**स-गुण**– -णाः पै १५, २१, ७.

**स-गृह**[e]– -हः तै ३, ५, ४, ३¶.

**सग्धि**[g]– -ग्धिः मा १८, ९; का १९, ४, १; तै ४, ७, ४, १; मै २, ११, ४; काठ १८, ९; क २८, ९; –ग्धिम् खि ५, ७, ३, ५; मा २८, १६; का ३०, २, ५; मै ४, १३, ८; काठ १९, १३; –ग्धीः पै १९, २२, ६.

**सग्धिति**[h]– -तिम् मै २, ७, १२.

**सग्धुम्** √सघ् द्र.

? **सग्मे**[i] मा ४, २६; का ४, ९,१.

**√सघ्** ( बधा. ), †**सघत्** ऋ १, ५७, ४; कौ १, ३७३; जै १, ३९,४; शौ २०, १५,४.

सघ्नोति मै ४, ४,६¶; असघ्नोत् मै ४,७,३¶; असघ्नोः ऋ१,३१, ३; सघ्यासम् तै ३,२,५,१.

सग्धुम् मै ४, ४, ६¶.

**सघन्**[j]– -घा[k] तै ३, २, १, १.

? **सघा घते, सघा घ मे** खि ५,१५, ३; सघाघते शौ २०, १२९, ११[l]; १२[l].

? **संकपः** पै १५, १२, ६.

**संकर्षन्ती**– सं√कृष् द्र.

**सं-कल्प**– सं√क्लृप् द्र.

? **संकल्पास्त्य स्मरन्ताधीभिर्य-मैवास्य दिध्मो**[m] पै ३,३७,१.

**सं√कष्** > सं-**कुष्य**[n] मै १,४,१३[o].

**सं-कसुक**[p]– -कः मै ४, १४, १७[q];

---

[a]) पूप. =२समान–।

[b]) विप. ( भ्रातृ- )। तत्रभवीयः यन् प्र. (पा ४, ४,११४)।

[c]) *समग्र-वीक्ष्– > नैप्र. साग्रेक्ष्– > ⌊सं१⌋ –क्ष इति शोधः (तु. २०८३ *b*)। सस्थ. ?अभिनुदावहे (है) > युनजावहे ( है ), आकृधि > आकारय ( आह्वय ) इति चापि शोधः द्र. ।

[d]) सकलं तेन शुध्यति इति त्रि-पदः शोधः ( तु. सपा. पै १, २१, ४; वैतु. सा. सः ⌊ग्लौः⌋ गडुतः (गरडतः) न शिष्यति इति, W. स गलतो नशिष्यति इति, CA स-गलन्त- ⌊स्यन्दमानेन पूयेन सहित-⌋ > –न्तः नशिष्यति इति च शोधान्तर-प्रयासाः)।

[e]) विप. । बस. । पूप. =सह ।

[f]) उप. ( < गो- ⌊पा ६,३,८२⌋ )।

[g]) सह-समानाऽन्यतर-भोजने तात्पर्यमिति कृत्वा पाम. ८,२,२५ ⌊२समान- >⌋ स- + ⌊√घस् >⌋ *ग्धि- इति, या ⌊९, ४३⌋ म. PW. WAG ⌊१, ६९⌋ MVG ⌊२५,२⌋ प्रभृ. ⌊सह >⌋स- + ग्धि- इति, पाम. ⌊पक्षे⌋ < √सघ् इति च?। भाप. ( *प्रजावत्ता- )। (√सृज् 'सृष्टौ' >) सर्ग- > *सर्ग-धिति > नैप्र. *सर्ग-धि- > यनि. इति मतम्। 'तृप्ति-प्रजा-साधन-विजयाऽऽत्म-काऽऽभीष्ट-चतुष्टयवत्ता यज्ञेन कल्पताम्' इति वा.। सस्थ. सपीति- इत्यपि द्र. ।

[h]) =सग्धि- (वैतु. WAG ⌊१, ६९; २, ३० b⌋ °धि + धि ⌊अधिक इत्र प्र.⌋ इति ?)।

[i]) अन्ये यनि. =⌊सह⌋ > स + √गम् इति वा ग्मा- ⌊गो-⌋ इति वेति कृत्वा यजमानार्थे संगतिरिति?। वश-गमा [विप. (संपद्भूता- ⌊गो-⌋]. इत् इति द्वि-पदः शोधः (तु. ⌊पर्यायभावेन⌋ तै १, २,७,१ ⌊BI⌋) सम्युत् इति पाभे. (तत्रापि इत् इत्यपरं पदमधिकं देयम् ⌊वैतु. अन्ये सम्युत् ते इति द्वे पदे ?⌋); एवं माश ⌊३,३,३,७⌋ सग्मे इत्यत्र मै ⌊१,२,५⌋ ?शुक्म यत् (पृ ३०६० *h*) इत्यत्र चाप्युक्तः शोधः द्र. ।

[j]) नाप. ( पक्षि-भेद- ⌊तु. भा. सा. PW. प्रभृ.⌋ यद्वा =वाहन- ⌊ < √सघ् 'वहने =कर्षणे'⌋ ?)।

[k]) पाभे. इते पृ १०१७ *d* द्र. ।

[l]) एकतरत्र RW. संज्ञायते इति पाभे., अन्यत्र विभे.।

[m]) संकल्पा अस्य स्मरन्ताधीभिर् यानेवास्य दध्मौ इति BKA. शोधः ? (तु. ⌊अंशतः⌋ पाका १,३,२९)।

[n]) वैतु. पपा. सं-कुश्य इति, सात. सं-कुष्य इति।

[o]) =सपा. माश्रौ ३, १, ३१। आपश्रौ ९, १६, १ सं-कृष्य इति पाभे. ।

[p]) विप. (⌊क्रव्यादेतर-⌋ *पवित्रभक्ष्य-भक्षक- ⌊अग्नि-⌋)। सम् ( साधु-, पवित्र- ) + भक्षस्– ( हव्य-, भोजन- ) > प्रास. *सं-भक्षस्– + भक्ष– ( भाप. ) > बस. *सम्भक्षस् भक्ष– > ( *सम्भकस्वक– > ) यनि. ।

[q]) सपा. पै १७,३१,४ संकुसिकः इति, तैआ २, ४,१ आपश्रौ ९, ३, २२ संकुसुकः इति च पाभे. ।

शौ १२, २,१२[a]; १४[b]; -कम् शौ १२, २, ११[c]; -कात् शौ ८, १, १२[d]; १२, २, ४०[e]; पै १६, २, २; -के शौ ५,३१,९; १२;२,१३[f]; १९[g].

सुङ्का[h]- †-ङ्काः ऋ ६,७५,५; मा २९, ४२; का ३१, २, ७; तै ४, ६, ६, २; मै ३, १६,३; काठ ४६, १; पै १५, १०, ५; -ङ्कासु पै ६,९,१२.

सं√काश्>काशि, संकाशयामि शौ १४,२,१२; पै १८,८,३.

१सं-काश- -शम् पै १६, ७३, २; -शे पै ९, ३, ५.

सं-काशिन्->सांकाशिन[i]- -नम् मै ३,८,९¶[j].

२सं-काश[k]- -शात् शौ ७, ११९, १.

सं√कित्, संचिकित्रे[l] ऋ १०, ३०, ६; काठ १३, १६†; संचिकित्रिरे[m] ऋ १०,९२,४; १०.

सं-चिकित्वस्- -त्वान् ऋ ४, ७,८.

सं-कीर्ण- सं√कॄ द्र.

संकुसिक[n]- -कः पै १७, ३१, २[a]; ४[b]; ९[g]; -कम् पै १७,३१,१[c]; -कात् पै १७, ३४, १[e]; -के पै १७, ३१, ३[f].

सं√कृ(करणे),सम्···कृण्वे पै १,६४, ४[o]; संकृणोतु पै २०, ४६, ४; †समकृण्वन् ऋ १०, ८२, ४; मा १७, २८; का १८, ३, ४; तै ४, ६, २, २; मै २, १०,३; काठ १८, १; क २८, २; सम्···अकृण्वन् ऋ ३,२,१०. सम्···चक्रुः ऋ ३,३१,१२. संचकर मै ४, १४, १७[p]; सम्···अक्रन् ऋ ३, ३५, ८; सम्···कारिषत्,सम्(कारिषत्) ऋ ६, ४८, १५[q]. समकारि ऋ ६,४१,३.

सं-कृति (बप्रा.)[r]- -तयः[s] पै ८, १५, २; -ति तै ५, ४, १२, ३[२]¶; -तिः तै ६,४,१०,२[t]; मै २,७, १३‡[u]; -तीः तै ४,२,६,२‡[u].

¶सं√कृष्, संकर्षति तै ६, ३,१,६; संकर्षेत मै ३,८,१०[v]; संकर्षेत्[v]; तै ६, ३, १, ५; काठ २६, १[३]; क ४०,४[३]. सम्···अकृक्षत् मै १, १०,१७; काठ ३६, ११.

सं-कृष्(त्>)ती- -न्ती शौ ११, ११, ८.

सं√कॄ>किर्, सम्···किरते पै २०, ५, ४[w]; संकिरः[x] पै ५, ३०, ५; १९, ३८, ७; सम्··· किरतु[w] खिसा ३, २; सम्··· किरतु[w] तै ३, ३,११, ५; मै ४, १२, ६[y]; †संकिर ऋ ६, ४६, २; मा २७,३८; का २९, ५,७; मै २, १३, ९; काठ ३९, १२; कौ २, १६०; जै ३, १५, ८; शौ ३,२४,५$[x];२०,९८,२.

सं-कीर्ण->संकीर्ण-नागा(ग-अ) श्व—पति[z]- -तिः खि २,१४, ७.

सं√क्लृप्>कल्प्,कल्पि,संकल्पेथाम् मा १२, ५७; का १३, ४, १३;

---

[a]) सपा. संकसुकः<>संकुसिकः इति पाभे. ।

[b]) पाभे. पृ ३२०८ *q* द्र. । [c]) सपा. संकसुकम् <>संकुसिकम् इति पाभे. । [d]) संकसुकात् इति सा.।

[e]) सपा. संकसुकात् <> संकुसिकात् इति पाभे. ।

[f]) सपा. संकसुके<> सकुसिके इति, आपश्रौ ९, ३,२२ संकुसुके इति च पाभे. ।

[g]) सपा. संकसुके<>संकुसिकः इति पाभे. ।

[h]) विप. (युद्धनिर्भरा- [पृतना-]), नाप. (युद्ध- [निघ २,१७]) । या [९,१४] प्रभृ. <√सच् वा सं√कॄ वेति, स्क. [पक्षे] <सं √गम् इति, सा. <सह+√कै इति, ?MW. <√सञ्ज् इति च?। (√*भृष् 'युद्धे'>) *भृष-भृषा->(*समखा->) यनि. इति मतम् (तु. संख्य-, संग- [Zd. जंग, नभा. दंगा प्रभृ. पर्यायाः])। इनुण् प्र. (पा ३,३, ४४) ततः स्वार्थे अण्

[i]) भाप. । प्र. (पा. ५,४,१५) ।

[j]) सपा. वैश्रौ १४, १०:१३ संकाशः इति पाभे ।

[k]) प्रास. । उप. भाप. (वैतु. अभा. <सं√काश् इति) । [l]) प्रपु३ (तु. पा ६,४,७६) ।

[m]) रुडागमः (पा ७,१,८) । [n]) =सं-कसुक- ।

[o]) उपसृष्टस्य धा. बन्धने वृत्तिः ।

[p]) सपा. शौ ६,७१,३ प्रभृ. संगृणामि इति, पै २, २८,२ वा करिष्यन् इति, तैब्रा ३,७, १२,३ संजगार इति, तैआ २,४,१ संजगर इति, कामा १२६:६ ?संजगरम् इति च पाभे. । [q]) वैतु. PW. GW. <सं√कॄ इति ।

[r]) भाप., विप. (इन्द्र-), नाप. (साम-विशेष-) । व्यप. (ऋषि-) । गस. वा बस. वा. । [s]) बहु. <सांकृत्य- ।

[t]) पाभे. पृ३१९७ *o* द्र. । [u]) पाभे. पृ१८३८ *m* द्र. ।

[v]) सपा. °र्षेत <> °र्षेत् इति पाभे. ।

[w]) पाभे. पृ ३१८७ *o* द्र. ।

[x]) सपा. °रः<>°र इति पाभे. ।

[y]) सु° इति पाठः? यनि. शोधः (तु. तै. BO. च) ।

[z]) कस. >द्वस. > बस. ।

तै ४,२,५,१; मै २,७,११; काठ १६, ११; २०, १; क २५, २; ३१,३.

संकल्पयति मै ३, ९,३¶[a]; शौ १२,४,३१; पै १७,१९,१; सम् ···कल्पयति काठ १३, १०¶; संकल्पय > या[b] शौ ४, १२, ५[२]; पै ४, १५, ३; समकल्पयन् शौ ६,१०९,१; पै १९,२७, ९. समचीक्लृपन् मै १, ७, १; काठ १३, ९[c]; १०[c]; सम्··· अचीक्लृपम् पै ५, १२, ५.

सं-कल्प[d]- -ल्पः ऋ १०, १६४, ५; -ल्पस्य शौ ११, १०, १; पै १६, ८५, १; -ल्पाः शौ ११, १०, २७; १५, ३,१०; पै १६, ८७,७; -ल्पान् शौ १६,६,१०.

संकल्प-कुल्म(ल > )ला[e]- -लाम् शौ ३, २५, २.

सं √कै > का( कान्तौ )

सं-चकान- -नः ऋ ५ ३०,७.

सं √क्रद्, न्द्, सम्···चक्रदत्, सम् ( चक्रदत् ) जै ३, १३, ९‡[f]; सम्···चक्रदः, सम् ( चक्रदः )[f] ऋ ९, ६४,३[g]; कौ २, १३३†; संचिक्रदः ऋ ९, ९०,४; कौ २, ७६०†.

सम्···अक्रान् ऋ २, ११,८[h].

†सं-क्रन्दन[i]- -नः ऋ १०,१०३,१; मा १७, ३३; का १८, ४, १; तै ४, ६, ४, १; मै २,१०, ४; काठ १८, ५; क २८, ५; कौ २, ११९९; शौ ५, २०, ९$; १९, १३,२; पै ७,४,२;९,२४, ९$; -नेन ऋ १०,१०३,२; मा १७,३४; का १८,४,२; तै ४,६, ४, १; मै २,१०,४; काठ १८, ५; क २८,५; कौ २, १२००; शौ १९,१३,३; पै ७,४,३.

सं √क्रम्,> क्राम्, ¶संक्रामति काठ ९, १४; २७, २; ३; क ४२,२; ३; संक्रामन्ति ¶तै १, ७, १, ६[j]; संक्रामतु तै ७,३,११, १[k]; काठ ४३, १; संक्राम तै ७, ३, ११,१; काठ ४३,१; संक्रामतम् शौ ७,५५,२; पै २०,१०,५.

सं-क्रम- -मः मा १५, ९; का १६, २,७; -माः ¶काठ ८,७[l]; २१, ९[m]; २८, २[l]; ४[l]; -माय मा १५, ९; का १६, २,७.

सं-क्रमण[n]- -णः क ६, ३[o]; -णम् काठ ७,१३[o].

¶संक्रमण-तम- -तमम् मै १, ७,३[p].

¶संक्रमण-तर- -रम्[p] काठ ९, १; क ८, ४.

सं-क्रममा ( ण > ) णा- -णा काठ ३९, ६.

¶सं-क्रान्ति- -न्तिः मै ३, ४, २; काठ ३९, ६.

¶सं-क्राम- -माः[l] क ७,४;४४,२;४.

¶सं-क्रामत्- -मन् मै ३, ९,१.

संक्रामन्ती- -न्ती काठ ३९,६.

सं √क्रुश्, सम् ( क्रोशतु ) शौ ८,८, २१; पै १६, ३०, ११; संक्रोशताम् शौ ८, ८, २१; सम्··· क्रोशताम् पै १६, ३०, ११.

सं-क्रोश[d]- -शान्[q] तै ५, ७, १४, १; -शैः[q] मा २५,२[r]; का २७, २, २; मै ३, १५, २.

सं-क्रोशमा( न > )ना- -नाः ऋ ४, १८, ६.

सं √क्लम् > सं-क्लान्त- -न्तम् पै ११, २, ७.

सं √क्शा > क्शापि, संक्शापयन्ति मै ३, ७, ७¶[s].

सं-क्शाप्यमान- -नः मै ४,५,४¶[t].

सं √क्षर्, समक्षरन् ऋ १०,४३,७[u];

---

a) सपा. तै ६, ३, ४, ४ काठ २६, ५ कल्पयति इति पाभे. ।

b) सकृत् सपा. पै ४,१५,३ संधीयताम् इति पाभे. ।

c) सपा. मा ८, २९ प्रभृ. समजीगमम् इति पाभे. ।

d) गस. भावे घञन्तम् । थादि-स्वरः ।

e) विप. (इषु-) । बस. पूप. प्रकृतिस्वरः ।

f) सपा. परस्परं पाभे. ।

g) वैतु. वें. सा. सकृत् सम् (प्रयच्छ) इति ।

h) तु. नव्मो मन्त्रः; वैतु. वें. सा. <√क्रम् इति? ।

i) विप. । गस. उप. कर्तरि कृत् ।

j) तु. सस्थ. टि. अनु । k) तु. सस्थ. टि. अधि ।

l) सपा. °क्रमाः <> °क्रामाः इति पाभे. ।

m) सपा. मै ३,३,९ समारोहः इति पाभे. ।

n) भावे कर्तरि च कृत् ।

o) सपा. °णः ( आपश्रौ ५, १४, १३ भाश्रौ ५, ८ १० च) <> °णम् (हिश्रौ ३,४,३१ च) <> माश्रौ १,५,४,१० °णतमम् इति पाभे. ।

p) सपा. °तमम् <> °तरम् इति पाभे. ।

q) सपा. °शान्<> °शैः<>काठ ५३,४ संघोषान् इति पाभे. ।

r) उ. म. = शब्दायमान- (अश्वाङ्ग-विशेष-) ।

s) सपा. काठ २४,४ क ३७,५ संख्यापयति इति पाभे. ।

t) सपा. तै ६,५,८,६ संख्यापयति इति पाभे. ।

u) तु. सस्थ. टि. २अभि ।

शौ २०, १७, ७†[a]; सुमक्षरः ऋ ९, ८५, ५.
**सं √क्षि** ( क्षये ), सुंक्षिणाति शौ ३, २८, २.
**सं √क्षि** ( निवासे ), सुम्···क्षेति ऋ ९, ७२, ३.
संक्षियेम[b] पै २, ३९, २.
**सं √क्षै**, > क्षापि, सुमक्षापयताम् मै ४, ८, १¶[c].
**सं √खाद्**, संखादेत् मै ४,७,४[२]¶.
**सं √खिद्**, > क्खिद्, सुम्··· अखिदत् ऋ ८, ७७, ३; सुमक्खिदत्[d] तै ६,६,११ १¶.
**सं √ख्या**, > ख्यापि, सुम्··अख्यत ऋ ९, ६१, ७; काठ २, ५[e]; क १, १८[e]; कौ २, ४३१†; जै ३, ३३, ६†; सुमख्ये, सुम् (अख्ये) मा ४,२३; का ४,७,४. ¶संख्यापयति तै ६, ५, ८,६[f]; काठ २४, ४[g]; २६,१; क ३७, ५[g]; ४०, ४.
सं-ख्यात- -ता शौ ४, २५, २; पै ४, ३४, २; -ताः शौ ४, १६, ५; १२, ३, २८; पै ५, ३२, ५.
¶सं-ख्यान[h]- -ने मै १, १०, ८; काठ ३६, २.
सं ख्याय तै २, ६, ३,५¶.
सं-ग- सं √गच्छ् द्र.
**सं √गच्छ्, गम्**, > गमि, सुंगच्छते ऋ ९, ९३,२; मै १, ६,१२¶; कौ २, ७६९†; संगच्छते तै ५, १, २, ५[२]¶[i]; संगच्छते क २९, ८¶[i]; सुम्··· गच्छते तै ३,३,८, ५[२]¶; †सुम् ( गच्छते ) ऋ ८, ९७, ११; कौ २, २८२; जै ३, २३, १४; शौ २०, ५४, २; सम्···गच्छति काठ ३१, १५; ¶सुंगच्छेते मै २, १, ९; काठ ३७, २; ‡संगच्छन्ते[j] तै ४, २, ६, २; मै २, ७,१३; ४,१४, ६; सुम्···गच्छे, सुम् ( गच्छे )[४] तै १, १, १०, २; सुम् (गच्छामेह)[k] मा १०, २१; का ११, ७, १; मै २, ६, ११; काठ १५, ८; सम्···गच्छासि पै २, २, ४; सुंगच्छताम्[l] ऋ १०, १६, ८(१४,८) ५]; †शौ १८, २, १०; ३, ५८; सुम्··· गच्छताम् मा ६, १०; १८; का ६, २, ५; ४, १; तै १, ३, ८, १; ६, ३, ७, ४; मै १,२,१५; ४, ३; ८; ३, ९, ६; काठ ३. ५; ५, ४; २६, ८; ३२, ४; क २,१२;४१,६; सुम् (गच्छताम्) मा २, ९; ६, १०; १८; ३८, १६; का २, २, ५; ६, २, ५; ४, १; ३८, ३, २; तै १, १, १०, २; ३, ८, १; १०, १[२]; ६, ३, ७, ४; मै १, १, १३; २, १५; ४,२; ३ ९,६; काठ ३,५; २६,८; ३२,२; क २,१२;४१, ६; संगच्छतु पै १९,१५, १[m]; सुम्···गुच्छन्ताम्[n] मै १, १, ९;४,१,९; सुम् ( गच्छन्ताम् )[n] मा ६, १०; का ६, २, ५; तै १, ३, ८,१; ६, ३, ७, ४; मै १, १, ९[२];२, १५; ३, ९, ६; ४. १, ९[२]; काठ ३,५; २६,८; क २,१२; ४१, ६; †सुंगच्छस्व ऋ १०, १४८ (१६,५)]; ८; शौ १८, २, २१; ३, ५८; पै ५, १३, १‡[l]; सम्···गच्छस्व पै २, ३९,४; †सुम् ( गच्छस्व ) ऋ १०, १४, ८; शौ १८, २, २१; ३, ५८; पै २, ३९, ४[२]; सुंगच्छध्वम्[o] ऋ १०, १९१, २; मै २, २, ६†; संगच्छै शौ ७, १२, १; ¶समगच्छत काठ ७, १५; क ६, ५; समगच्छत् पै १, ४७, १; सुम-गच्छन्त तै २, ५, ३, ६[a]; ७[a]; ६, ८, ३¶[a]; शौ ७, ८४, २; १०, १०, १७; समुगच्छन्त ऋ

a) तु. सस्थ. टि. २अभि ।
b) =सपा. वैताश्रौ २४,१ । तैब्रा ३, ७, १३,१ हिश्रौ ९,५,३७ संक्षयेम इति पाभे. ।
c) सप्र. काठ ३०, १ क ४६, ४ समविष्टाम् इति पाभे. ।
d) सपा. मै ४,७,६ समबृहत् इति पाभे. ।
e) सपा. तै १,२,५,२ आपश्रौ १०, २३,६ बौश्रौ ६, १३ : १२ सुम्···पश्यस्व इति पाभे. ।
f) पाभे. पृ ३२१० t द्र. ।
g) पाभे. पृ ३२१० s द्र. ।
h) गस. भावे ल्युडन्तम् ।
i) सपा. मै ३,१.३ काठ १९,२ संगच्छेत इति पाभे. ।
j) सपा. ऋ १०,९७,६ प्रमृ. समग्मत इति पाभे. ।
k) सपा. तै १,८,१५,१ सुम् (गच्छेय) इति पाभे. ।
l) सपा संगच्छताम् ( तैआ ६. ४, २ च) <> संगच्छस्व इति पाभे. ।
m) पाभे. पृ २४७२ p द्र. ।
n) पाभे. पृ २०८९ c द्र. ।
o) =सपा. तैब्रा २, ४, ४,४ बृदे ८, ९४ । शौ ६, ६४,१ पै १९,७,२ संजानीध्वम् इति पाभे. ।

१०, ८२, ६[a]; मा १७,३०†[a]; का १८, ३, ६†[a]; तै २, ५, ३, ७; ४, ६, २,३[२];†[a];‡[b]; मै २, १०, ३‡[b]; समगच्छन्त पै १, १०३, ४; १६, १०८, ६; ¶संगच्छेत मै ३. १, ३[c]; ४, २, ३; काठ १९, २[c]; सम् (गच्छेत) पै १९. ४४, ११-१४; सम् (गच्छेरन्) पै १९, ४४, १५; सम् (गच्छेय) तै १.८,१५, १[d]; १६,१; मै २, ६,११;१२; ४, ४,५; काठ १५, ८; शौ ६, १२४, १; पै १९. ४०. ४; ५; ४४, ११-१५; सम् (गच्छेमहि) मा १०, २१.

संगमामहै ऋ ८. ९१,४; पै ४, २६, ३†; संगमेमहि ऋ ५, ५१,१५; खि ४, ८,४; सम्… गमेमहि ऋ ६, ५४, २; ७, ८१, २; मै १, ५, ४†; कौ २, १०२†; जै ३, १०, ४†; शौ १, १, ४[e]; ७, १०, ४; पै १, ६, ४[e]; सम्…गमेम ऋ ५ ४२,[१८;४३,१७; ७६-७७,५].

सम्…जगम्युः ऋ १,१७९,२.

†सम्…जग्मे ऋ १, १६४, ८; शौ ९,१४,८; पै १६, ६६, ८; सम्…जग्मे शौ २, २,३; पै १, ७, ३; संजग्मिरे ऋ ६, १९. ५; १०, ५, २; सम्…जग्मुः ऋ ३, १, १३; ६,३४,१; १०, ६,६; सम्…गमिष्यति पै १९ ३६, १२; सम्…ग्मिषीय, सम् (ग्मिषीय)[३] मा ३, १९[f]; का ३,३,११[f]; सम्…ग्मीय[f], सम् (ग्मीय)[३f] मै १,५,२; ८; काठ ६, ९; ७,६; क ४, ८;५, ५; सम्…अगत शौ १०, १०, १३-१५; पै १६, १०८, ३-५; सम् (अगत) ऋ ४.३४,२[g]; शौ १०,१०,१३-१५; पै १६,१०८, ३-५; सम्…गत मा ३७,१४[h]; १५[२i]; का ३७, ३,१[h]; २[२i]; मै ४,९,६[२]; सम् (गत)[i] मा ३७, १५[२]; का ३७, ३,२[२]; मै ४,९, ६[२]; समगन् पै १०, ६, १०; समगमत ऋ १, ८०, १६; ९, १४, ७[j]; १०, ९१, १२[k]; †समग्मत[l] ऋ १०,९७, ६; मा १२, ८०; का १३, ६, ६; काठ १६, १३; क २५, ४; पै ११, ६, ९; सम्…अग्मत ऋ १. ११९,३; ४, ३४, २[m]; सम्… अग्मत, >ता ऋ १, २०, ५; ४, ३४, १; ७, ७३, ४; खि ५, ७, ४, ११; मा ६, २८[n]; का ६, ७,६[n]; तै १, १,८,१[n]; शौ २, ३०, २; पै २, १७, ३; सम् (अग्मत) खि ५, ७, ४, ११[२]; मा ६, २८[n]; का ६, ७, ६[n]; तै १, १, ८, १[n]; शौ २, ३०, २[२]; पै २,१७,३[२]; सम्… ?अगथाः मै १,५,२;८; सम्… अगथाः मा ३, १९; का ३, ३, १०; तै १, ५, ५,४;७,६; काठ ६, ९; ७, ६; क ४, ८; ५,५; सम् (अगथाः) मा ३, १९[२]; का ३, ३, १०[२]; तै १, ५, ५, ४[२]; मै १,५, २[२]; ८[२]; काठ ६, ९[२]; ७, ६[२]; क ४, ८[२]; ५,५[२];

संगमः[o] ऋ १०, १६, १४;

‡समगन्महि[p] काठ ४, १३; २९, ३; ३८, ५; पै १, ३३,१; सम्…अगन्महि, सम् (अगन्महि)[२] मा २, २४; ८, १४;१६; का २, ६, १;९, ३, २; तै १, ४, ४४, १; मै १, ३, ३८; ४, १४, १७; काठ ४, १३; क ३, १०; शौ ६. ५३, ३; पै १९, ८, ३;२०,३४,१; समगस्महि[p] ऋ १, २३,[२३; १०, ९,९]; क ३, ११; सम्…अगन्म[q] शौ १६, ९,३; पै १८, २९, ४.

संगमयति काठ ७, १५¶; क ६, ५¶; शौ ९,५,२४; पै १६, १००, २.

समजीगमत् शौ ६, ३२, ३;

a) सपा. मै २,१०,३ समपश्यन्त इति पाभे.।

b) सपा. ऋ १०,८२,५ समपश्यन्त इति पाभे.।

c) पाभे. पृ ३२११ *i* द्र.। d) पाभे. पृ३२११ *k* द्र.।

e) पाभे. पृ ३१८२ *m* द्र.।

f) सपा. सम्…ग्मिषीय (माश २,३,४,२४ शांश्रौ २, ११,५ च) <> सम्…ग्मीय इति पाभे.।

g) वैतु. सा. सम् (अग्मत) इति।

h) सपा. माश १४, १, ४, ४ सम्…अगत इति, तैआ ४,७,४; ५,६,९ सम्…अयतिष्ट इति, मै ४,९,६ यजत्र इति च पाभे.।

i) सपा. माश १४, १, ४, ५; ६ सम्…अगत, सम् (अगत) इति पाभे.। j) तु. सस्थ. टि. २अभि।

k) तु. सस्थ. टि आ। l) पाभे. पृ ३२११ *j* द्र.।

m) वैतु. GW. अग्मत इति। n) पाभे. पृ२०८९ *c* द्र.।

o) पाभे. पृ२४०७ *a* द्र.। p) पाभे. पृ३१९६ *j* द्र.।

q) सपा. तै १. ६,६,२;७,६,२ सम्…अभूवम् इति, मा २, २५ प्रमृ. माश १,९, ३, १४ शांश्रौ १, १२, ८ सम्…अभूम इति पाभे.।

पै १९, ११, ७; २०, ३७, ४; सम्...अजीगमत्, सम् (अजीगमत्) शौ ६, ७४, १[a]; समजगिमरन् ऋ १०, २७, १५; समजीगमम्[b] मा ८, २९; का ९, ५, २; तै ३,३,१०,१.

सं-ग[c]- -†गे ऋ ४, २०, १; १०, १३३,१; मा २०,४८; का २२, ५, २; तै १, ७, १३, ५; मै ४, १२,४; कौ २,११५१; जै ४,१, ४; शौ २०, ९५, २.

सं-गच्छमा(न>)ना- -ने ऋ १, १८५,५.

१सं-गत,ता- -तम् पै २,५८,५?[d]; -ता ऋ ८, ७८, ८; -ताः पै १७, १५, ७; -तानाम् काठ ४, १६[e]; -तानि ऋ १,३६,५; जै ४, १९,३†; शौ ६, ४४,२[f]; -तानः ऋ ७, ७६, ५; -ते पै १९, २, १४; २०, २८, ५; -तेभ्यः खि ५, ७, २,११; ४, १५; मा २१, ६१; का २३, ६, १४; मै ४, १३, ९; काठ १९, १३; -तेषु शौ ७, १३, १.

२सं-गत- -ते खि ७,५,१[g].

१सं-गति- -तिः पै १३, १४, १५; -†त्याम्[h] ऋ १०, १४१, ४; शौ ३, २०,६; पै ३,३४,७.

सं-गत्य ऋ १०,९७, २१; मा १२, ९४†; का १३,६, २०†; तै ४, २, ६, ५†; मै २, ७, १०[i]; काठ २९, ५[?]¶; क ४५, ६[?]¶; शौ ३, ४, ७; ९, ४, १५; ११, ८, २१[j]; १८, २, २६; पै १, ७२,१; ३,१,७;१७,६; ५,९,८; ११, ७; १६,२५, ५; १९,३१, १०;४८,११.

सं-गथ[k]- -थे ऋ १, ९१, ⌊१६; ९, ३१, ४⌋; २, ३८,१०; ८, ६,२८?[l,m]; खि ५,७,१,१; मा १२,११२†; का १३, ७,११†; †तै ३, २, ५, ३; ४, २,७,४; मै २, ७, १४†; ४, १३, २; १४, ६†; काठ १५, १३; १६, १४†; क २५,५†; पै ९, ४,८; १९,९,१२; २०,५१,४†; -थेषु खि ३,१५,१३; पै ९,२५,८.

सं-गम, मा[n]- -मः[o] शौ ६, २४, १; पै ३, १७, ६; -मम् पै १३, ४, ६; -मा पै ५, ३०, ७[p]; -मे ऋ १,१०२, ३; १०, ३८, ३; १०७, ४; १२३, १; मा ७, १६†; २६, १५?‡[l]; ३३, ८६[h,q]; का ७, ७, १†; तै १, ४, ८, १†; मै १, ३, १०†; १५‡[h]; ११, ४‡[h]; २, २, ६‡[h]; ९, २‡[h]; काठ ४, ३†; १०, १२‡[h]; १४, २‡[h]; क ३,३†; कौ १, १४३?‡[l]; जै १, १५, ९?‡[l]; -मेषु ऋ १०, १३१, ३; शौ २०,१२५,३†.

सं-गमन[r]- -†नः ऋ १, ९६, ⌊६; १०, १३९, ३⌋; मा १२, ६६; का १३, ५, ५; तै ४, २, ५, ४; ५, २, ४, ४; मै २, ७, १२; ३, २, ४; काठ १६, १२; क २५, ३; शौ १०, ८, ४२; -नम् ऋ १०, १४, १; मै ४, १४, १६; शौ १८, १, ४९; ३, १३†; -ने[s] शौ ९,५,१९; पै २, ३९, ४; १६, ९९, ५.

संगमनी[t]- -नी ऋ १०, १२५, ३; तै ३,५, १, १; शौ ४, ३०, २†; ७,८४,३; पै १, १०३,१.

सं-जग्मान, ना- -नः ऋ १,६,७[u]; ९, ६४, ३०; १०, ६१, ७; मा ७, १३[v]; १८[v]; का ७, ६, २[v]; ७, ३[v]; †कौ २, ६; २००[u];

a) पाभे. पृ३१९९ k द्र. । b) पाभे. पृ ३२१० c द्र. ।

c) नाप. (संग्राम- ⌊तु. निघ २, १७⌋ । गस. उप. अधिकरणे डः प्र. (वैतु. GW. <√गा इति) ।

d) असं° इति पाठः संभाव्यते ।

e) =सपा. आश्रौ ४,२,३ । तैब्रा २,४,३,३ संयातानाम् इति पाभे. । f) सपा. पै २०,३३,७ संभृतानि इति पाभे. ।

g) सपा. खिसा २२, १ संगथे इति पाभे. ।

h) सपा. °त्याम् <> °गमे <> मा १६, ४ प्रमृ. नीउ ६ अयक्ष्मम् इति पाभे. । i) पाभे. पृ ३१९७ a द्र. ।

j) सपा. पै १५,१४,११ ब्रूमः इति पाभे. ।

k) नाप. । गस. उप. अधिकरणे थक् प्र. उसं. (पाउ २, ११) । थादिस्वरः । l) सपा. °थे <> °मे इति पाभे. ।

m) सं-गमथ->-थे इति शोधः (तु. छन्दः) ।

n) विप., भाप. । गस. उप. कर्त्रादौ कृत् ।

o) समह-संगमः > सपा. पै १९, ७, ८ उपगच्छत इति पाभे. । p) विप. (स्फाति-) ।

q) °ग° इति स्वरः ? यनि. शोधः (तु. सप्र. मै १, ३,१५ प्रमृ.) । r) विप. (अग्नि-, यम-) । गस. उप. कर्तरि ल्युट् प्र. । s) भावे कृत् ।

t) विप. (संगमयित्री- ⌊रात्री-, वाच्-⌋) ।

u) सपा. °नः (या ४,१२ च) <> °नाः इति पाभे. ।

v) सपा. °नः (माश ४, २, १, १९ काश्रौ ९, १०,९ च) <> °ना <> °नौ (तैब्रा १, १, १,२ आपश्रौ १२,२२,८ प्रमृ. च) इति पाभे. ।

†जं ३, १, ८; १८, ७[a]; †शौ २०,४०,१[a]; ७०, ३[a]; –ना[b,c] काठ ४, ४; २७, ७; क ३, ३; –‡ना.[a] मै ४, २, १०; शौ ३, १४, ३; पै २, १३, ५; –¶नाभ्याम् मै ३, ९, ५; काठ २६, ७; क ४१,५; –नासु ऋ १, ७४, २; कौ २, ७३०†; -ने मै ४, ७, ७¶; –नौ मै १, ३,१२¶[b]; ४,६,३[b]; ७,७¶.

२सुं-गति[d]– -तिम् ऋ ४, ४४,१; शौ २०,१४३,१†.

संगत्य प्रभृ. सं√गच्छ् द्र.।

सं-गर– सं√गृ,गॄ (शब्दे) द्र.

सं-गव[e]– -वः शौ ९, १०, ४; पै ९, १२, १०; १६, ११५,२; –वम् मै ४, २, ११; –वे ऋ ५, ७६, ३; कौ २, ११०४†.

सं√गा, सुम् (अगात्) शौ १९, ५७,२[f]; पै ३, ३०,२; सुम्··· अगुः शौ १९, ५७,२[g]?[g]; पै ३, ३०,२[g]?[g]; संगुः पै९,१२,३[h].

१संगिर्– सं√गृ,गॄ (शब्दे) द्र.

२सं-गिर्–,संगिर्-,संगिरत्-,सं-गीर्थे सं√गॄ (निगरणे) द्र.

?संङ्कुरुष्टः पै १९, ३६,११.

सं√गृ,गॄ (शब्दे), संगृणीते ऋ ४, २५, ७; संगृणामि[i] शौ ६, ७१, ३; ११९, १; पै १६,५०, ६; संगृणन्तु पै १,९१,१-३[j].

सं-गर[k]– -रः शौ ६, ११९, २; पै १६,५०,८; –रम् शौ ६, ११९, ३; पै १६,५०,७.

१सं-गिर्[l]– -गिरः ऋ १०,८९,९.

ϕसं-गृणान– -नः खि १,४,७.

सं√गृभ्,ह्, ग्रभ्,ह्, संगृभायति ऋ १,१४०,७; †सुंगृभाय ऋ १, ८१,७;८,७०,१२[२];१०,४४,४; मै ४,१२,४; काठ १०, १२; शौ २०,५६,४; ९४,४; समगृभ्णन् काठ ३९, २; संगृभ्णाः ऋ ३, ३०,५.

सम्···जग्रभ पै ८, ७, ६?; समग्रभीः पै ८, १०, ८; समग्रभम् मा ९,४[m]; का १०, १,५[m]; मै१,११,४[m]; काठ १४, ३[m]; पै ३,१५,६[२n];२०,२४,९; ३७,२; सम्···अग्रभम् शौ १०, ४,१९; पै १,१११,३; १६,१६, ९; सम्···अग्रभीम् तै १, ७, १२,२[m].

समजग्रभीत् ऋ ८, ६, १७; सम्···जग्रभम् शौ ६,२१,१; पै १,३८,१.

¶संगृह्णाति मै २,३,२[३]; काठ १२, २[२]; २२, १३; संगृह्णात् तै २,६,१०,२¶; समगृह्णात् तै ६, १,६,४¶; ¶समगृह्णन् मै २,३, २[२]; काठ १२,२[२]; संगृह्णीयात् तै ३,४, ८, ६¶; सम्···गृह्णीयात् काठ २८,९[o].

समग्रहीत् काठ १९,९¶.

सं-गृभाण– -णयोः मै २,१,२¶[p].

†सुं-गृभी(त>)ता- -ताः ऋ ७, १०४,८; शौ ८,४,८; पै १६,९,८

सं-गृभीतृ[q]– -ता ऋ १,१००,९.

सं-गृभ्य ऋ १, ५३, ३; ३, ५४, १५; १०, ४६,६; शौ ११, ७, ६[r]; २०, २१,३†.

¶सं-गृह्य तै २, १, ५, १; ४, ३, १; मै १,६, ५; ३, १०,१; काठ ९, १७; २२,१३.

१सं-ग्रहण->°णी[s]- -णी शौ १९, ५८, ३; पै १,११०,३.

¶२सं-ग्रहण[t]– -णम् तै २, ३,९,२; काठ १२,२; –णेन मै २, ३,२[u].

¶सांग्रह(ण>)णी[v]- -णी, -णीम् तै २, ३,९,२.

---

a) पाभे. पृ३२१३ *u* द्र। b) पाभे. पृ३२१३ *v* द्र.।

c) °नाः इति SI. शोध्यः।

d) विप. (संप्राप्तिकृत्- ⌊रथ-⌋)। बस। 'गोः प्रातर्युतिं (कर्मणि ष.) संगतिं (समश्नुवानम् ⌊तु. ऋ १,१८०,१०⌋' इति वा। e) नाप. (गोदोहन-काल-)। 'संगता गावो यस्मिन् काले' इति विग्रहः। तस. (तु. पा २,१,१७) समासान्तष् टच् प्र.। f) सुर्वम् इति RW. WI.।

g) द्वितीये, तृतीये, चतुर्थे च श्रवणे सुमु(म् उ) इति शोधः (तु. छन्दः)। h) पृ १८३० *m* द्र।

i) पाभे. पृ३२०९ *p* द्र। j) तु. सस्थ. टि. २अभि।

k) =प्रतिज्ञा-, स्वीकृति-। उप. भावे अप् प्र. थादि-स्वरश्च। l) =संगर-।

m) सपा. °भम् (माश ५,१,२,८ च)<>°भीम् इति पाभे.। n) सकृत् सपा. शौ ६,८९,३ समस्यताम् इति पाभे.। इतरत्र विभे.।

o) समिव गृह्णीयात् >सपा. क ४४,९ समवगृह्णीयात् इति पाभे.। p) पाभे. पृ ३१८० *m* द्र।

q) गस. उप. तृन्नन्तम् (तु. वें. BW. प्रभृ.; वैतु. सा. क्रिप. इति ?)। GW. °त->-ता इति ?।

r) पाभे. पृ ३१९४ *b* द्र.।

s) विप. (द्यावापृथिवी-)। गस. उप. कर्तरि ल्युट् प्र०।

t) भाप. (स्वीकरण- ⌊तु. PW. प्रभृ.⌋)।

u) नाप. (सांग्रहणीष्टि-)।

v) नाप. (इष्टि-भेद-)। तस्येदमीयः अण् प्र.।

सं-ग्रहीतृ[a]- -¶तुः तै १,८,९, २; मै २,६, ५; ४,३,८; काठ १५, ४; –तृभ्यः मा १६, २६; का १७,३,५; तै ४,५,४, २; मै २, ९,४; काठ १७,१३; क २७,३.

?संगृभाहितम् पै २०,१३,४.

सं√गृ सं√गृ द्र.

सं√गृ (निगरणे)>गिर्, संगिरामि शौ ६,१३५,३; पै ५,३३, ९[2b]; संगिरामः शौ ६,१३५,३[b].

२सं-गिर्- -गिरः शौ १८, ४, ६०†[c,d]; –†गिरम्[d] ऋ ९, ८६,१६; कौ १,५५७; २,५०२; जै १,५७,४; ३,३९,१.

सं-गिर्[e]- -रः शौ ६, १३५, ३; पै ५,३३,९

सं-गिरत्- -रन् पै ५,३३,९.

सं-गीर्य शौ ६,१३५,३.

सं√ग्रथ्,न्थ्>सं-ग्रथित- -तन् ऋ १०,६१,१३.

सं-ग्रन्थि- -न्थ्याः पै १,९९,२.

सं√ग्रभ्,ग्रह् सं√गृभ्, ह् द्र.

सं-ग्राम[f]- -मः काठ १३, ५?¶[g]; –मम् ¶तै २, १, ३, २[2]; २, १,२; ३[4]; २,४; ४,६[2]; ६,१[2]; ८,२;३; ३,४,८,३[2]; ४,७,१५, २$[h]; ¶मै १, ९, ६; १०, १६; २,१, १[4]–३[4]; १०; २,१०[3]; ३, ३,७; १६,५$[h]; ४,२, ६; ११; ३,१; २; ४; ६, ८; ¶काठ ९, १४[2]; १७[4]; १०, ३; ५[2]; ९[2]; २२, १५$[h]; २८, ३[2]; ¶क ४४, ३[2]; शौ ११, ११, २६; पै ५, २९, ७; –मस्य काठ १३,५¶; शौ ५, २१,७; –माः शौ १२,१, ५६; –¶मात् काठ २६,२; क ४०, ५; –मान्[h] शौ ४,२४,७; पै ४, ३९, ७; ¶–मे खि ४,२,९$; तै २, १,३,१;८, ४;२,२,४; ४,५; ८,२; ३,४,८, ३; मै १,९,६[2]; २, १,७; १०[2]; २, ३; १०[3]; १२[2]; ५, ८; ३. ३, ७; ४, २, ६; ११; ३, ४; काठ ९,१४; १०,१; ३;५; ८[2]; ९; १३, ४; ५; २१, १०; ३७, १२; –मेषु खि ४,२,१०[1].

संग्राम-जित्- -जित् शौ ५,२०,१०.

सांग्रामजित्य[j]- -त्याय शौ ५, २०,११; पै ९,२४,११.

¶संग्रामिन्- -मिणम् मै १,९,६.

सं√घस्>सं-जिघत्सु- -त्सुः पै ५, २७,७.

सं-घात- सं√हन् द्र.

सं√घुष्>सं-घोष- -षान्[k] काठ ५३,४.

?संघोरं चक्षुः[l] शौ १९,३५,३[m].

सं√घ्रा ¶समघ्राताम् काठ २८, २; क ४४,२.

√सच्, सश्च् (बधा.), सचते शौ ५, १,७; १२, ३, ५०[n]; सचते ऋ १, ९१, १४; १२५, १; १४५, २; १८०, ५; २, १८, २; ४, ७, ११; १२,२; ५,३४, ५; ४४, ३; ६, २८, ३; ८, ४, ६[o]; ९; ६०, १८; ९, ७४, १; ८६, ८;९३, ३; मा ८, ३६[p]; ३२, ५[p]; का ८, ११, १[n]; काठ ७, १६†; २०, २¶; क ३१, ४¶; †कौ १, २७७; २,७७०; जै १,२९, ७†; शौ ४,२१,३†; ३४, ३; ३७, ११; १२, ३, २; पै ६,२२,४; १३, ४,१६; १७, ३६, २; †सचेते ऋ २,४१,६; कौ २, २६२; जै ३, २२, ९; सचेते ऋ ३,३९, ३; सचन्ते ऋ १,५९,६;१३४, ⌊२;३,१३,२⌋; ७,९१,६; १०,५,४;६४,७; शौ ६,११६,३;१२,३,४०[q]; सचन्ते

---

a) नाप. (सारथि-)। b) सपा. परस्परं पाभे.।

c) °गिरः इति पाठः? यनि. शोधः। (तु. पाभे. सा. मूको. च)।

d) सपा. °गिरः <> °गिरम् इति पाभे.।

e) त्रिप. (निगरण-कृत्- ⌊समुद्र-⌋)। गस. उप. कर्तरि प्र.।

f) नाप. (जन-समुदाय-, सेना-, युद्ध-)। व्यु.?। <सम्+√गम् वा सम्+√गृ 'निगरणे' वा सम्+ ग्राम- वेति या ⌊३, ९⌋ प्रभृ., सम्√ग्रस इति पाउत्र ⌊१,१४३⌋; तु. SEY ⌊५३⌋। g) °मे इति शोधः?।

h) सपा. °मम् <> °मान् इति पाभे.।

i) °ग्रा° इति स्वरः? यनि. शोधः।

j) भावे ष्यञ् प्र. (पा ५, १,१२४)।

k) पाभे. पृ ३२१० q द्र।

l) त्वं घोर-चक्षु- > -क्षुम् इति शोधः (तु. १६५३ i, सस्था. पै ११,४,३ च)।

m) पाभे. पृ १२८१ o द्र.।

n) सपा. पै १७,४०,१० सृजते इति पाभे.।

o) धा. युद्धे वृत्तिः। वृष- > √ *वृषस्य > *वृषस्यते > यनि.)।

p) =सपा. तैब्रा ३,७,९,५ तैआ १०, १०,२ तां १२, १३,३२ जैमि १, २०५ शांश्री ९, ५, १ आपश्री १४,२, १३ मउ ९,४ नृपू २, १०। पै १६, १५१, ९ वैताश्री २५,१२ दधते इति पाभे.।

q) सपा. पै १७,३९,१० सजन्ते इति पाभे.।

ऋ १,६०,२; १००,१३; १२३,८; ४,४२,[१; २]; ७,५,५; ३३,७; ६१,५; ९,८९,५; ९५, ४; १०, १२८,८; खि १,२,३?[a]; ७,६,१; तै १ ४, ११, १; ३,४,१,१¶; ५, ११, ५†; ४, ३, ११, १; ५, २, २, ३¶; मं १, ८, ६¶; २, १३, १०; ¶काठ १०, ५; २३, १; २४, ६; २७,५; ३९, १०$; ¶क ३५,७; ३७,७,४२, ५; शौ ६,१२२,३[b]; १२,३,७[c]; १६[d]; २६[२e]; २८; पै १, १०४, ४; १६, ४९, ९; ५१, ७; †सुचसे ऋ १०, ८,६; मा १३, १५; १५,२३; का १४, १, १५; १६, ५, ४; तै ४, ४, ४, १; मैं २, ७, १५; रुचसे ऋ २,१, ३; ५, २८,२; काठ १६,१५†; शौ ५, ७, ८; पै ७, ९, ५; सुचेथे ऋ ८, ५, २; सचेथे ऋ १, १५२,[(२, ८) १]; १८०, १; १८३, २; १०, १०६,१०; सुचध्वे शौ २, २, ४; पै १, ७, ४; सचावहि पै १, ९८, ३; सुचावहे ऋ ७, ८८, ५[f]; सुचत ऋ ४, ५,९; सुचन्त ऋ १,७३, ४[g]; १०, १११, ७; †सचन्त ऋ १, १५६, ४; १६४, [५०; १०, ९०, १६]; २, ५, ५; ३, १, १४; ५, १७, ५; ४३,१५; ७, ५, ४; ७४, ५; १०,१७२, १; मा ३१, १६; का ३५, १, १६; मं ४, १०, ३; काठ १५, १२; कौ १, ४४३; जै १, ४६, ७; शौ ७, ५, १; पै २०, २,२; सचताम् ऋ १, १८३,२; जै १, २४,१०‡[h]; शौ १,१२,३; पै १, १७,३; सचताम्[i] तै ३,२,८,४; सचन्ताम् ऋ १, ९८, ३[j]; ४, ५, १४; ४१, १०; ७, १०४, १४; १०, ८९, [१५; १०३, १२]; मा २, १०†[j]; १३, १; १७, ४४†; का २, २, ९†[j]; १४, १, १; १८, ४, १२†; तै १, ६, ३, २†[j]; मै १, ४, १†[j]; ७,१; २, ४,३†[j]; †काठ[j] ४, १३; ५, २; ३२, २; क ३, ११†[j]; कौ २,१२११†; शौ २, ३४, १[k]; ४, १५, २; ८, ४, १४†; १२, ३, ४३; पै ३, ३२,२[k]; ५,७, ४; १५,६; १६, १०,४; १७, ४०,३; †सुचस्व, >स्वा ऋ १,१,९; १२९,९[g]; ६, २४, १०; मा ३, २४; का ३, ३, १६; तै १, ५, ६, २; मै १, ५, ३; काठ ७, १; ८; क ५, ९; सचस्व शौ १२, २, ५३; पै १७ ३५, ३; सचेथाम् शौ १२, ३,९; पै १७, ३६, ९; सचध्वम् शौ ३, १४, ६[l]; ४, ३७, १२; १८ ३, १९; पै २, १३, ३[l]; १३. ४, १२; १९, १०, १२[m]; सुचावहै मै ४,१४, ९‡[l]; शौ ६, ४२, १; सचावहै शौ ६, ४२, २; पै १९, ८,१०; ११; ¶असचन्त मै २, १, ११; काठ १०, ५; ९; २३, १; क ३५,७; †सचेत ऋ ५,५२,१५; ८, १०२, २२; कौ १, १९; जै १, २, ९: सचेताम् ऋ १, १८५, ९; ¶सुचेरन् तै २, २, २, २; †सचेत ऋ ८, ४८,१०; तै २, २, १२, ३; काठ ९,१९; सचेवहि ऋ ८, ६९, ७; १६; शौ १४, २,७२[n]; †२०,९२,४; १३; सुचेमहि ऋ ५, ५०, २; १०, ७, १; †सचेमहि ऋ १, १३६, ६[२]; २, ८, [६ (८, २५, ११;)]; १०, ५७, ५; ६[o]; ६४, ११; मा ३, ५५; ५६[o]; का ३, ७,५; ६[o]; तै १, ८, ५, ३; मै १, १०, ३; काठ ९, ६; क ८, ९; पै १८, १४, २$[n]; १९,२४,१२; १३[o].

a) सचेन्ते इति पाठः? यनि. शोधः।

b) पाभे. पृ ३१५९ e द्र.।

c) सपा. पै १७,३६,७ सृजन्ते इति पाभे.।

d) सपा. पै १७,३७,६ सजन्ते इति पाभे.।

e) सपा. पै १७,३८,५ सजन्ते इति पाभे.।

f) सपा. सचावहे <> सुचावहै इति पाभे.।

g) तु. सस्थ. टि. आ।

h) सपा. ऋ १,९, २ शौ २०, ७१, ८ आ…सृजत इति पाभे.।

i). प्रपुर (तु. सस्थ. अश्नुताम् इति)।

j) सपा. माश १, ८, १, ४२ शांश्रौ ४, ९,१ आपश्रौ १३, २२, १। मं १, ३, ३९ असश्चत इति पाभे.।

k) पाभे. पृ २९०७ e द्र.।

l) सपा. आश्रौ ३,११,६ सन्तु इति पाभे.।

m) सपा. मंब्रा १, २,२१ आगृ १,२१,७ शांगृ २, ४,१ पागृ १, ८, ८ मागृ १, १०,१३; २२,१० हिगृ १, ५,११ जुषस्व इति पाभे.।

n) सपा. °वहि <> °महि इति पाभे.।

o) = सपा. कौसू ८९,१। तैब्रा २,४,२,७; ३,७,१४,३ आपश्रौ ६,१६,१२ प्रभृ. अशीमहि इति पाभे.।

सचोमहि काठ ३७, १०.
सिषक्ति[a] ऋ १, ५६, ४; ५, ७३, ८; ६, ५०, ५; ६८, ३; ७, ७०, २; १०, ५,१;९२, ९; †सिषक्ति ऋ १, ३८, ८; ६६, १; ७, ९१,३; ९, ८४, २; मा २७, २३[b]; का २९, ३, १; तै ३, १, ११, ५; काठ ११, १३; सिसक्षि[c] ऋ १,७३,८; †सिषक्तु ऋ ५, ४१, १५; २०; ८, ७५, १३; तै २, ६, ११, ३; मै ४, ११, ६; †सिषक्तु ऋ १, १८, २; ७, ३७, ८; ९७,३; मा ३, २९; का ३,३,२१; मै १.५,४; काठ ७,२; क ५ २?[d]; $पै २, ८२,१-५;८३,१; ३; ?सिषजन्तु पै २,८३,२; †सिषक्त ऋ १०, १९,१; पै १९,२१,१४.
सश्चति ऋ १, १०१, ३[e]; †सश्चत[f] ऋ ७, २६, ४;९०,३; मा २७, २४[g]; का २९, ३, २; मै ४, १४, २; †सश्चसि ऋ ८, ५१, ७; खि ३, ३, ७; मा ३, ३४; ८, २; का ३, ३, २६; ८, १, १; तै १, ४, २२, १; ५, ६, ४; मै १, ३, २६; काठ ४,१०; ७, २; क ३, ८; कौ १, ३००; जै १. ३१,८; सश्चे ऋ ५, ३३,८; †सश्चत् ऋ २, २२, [१-३]; कौ १, ४५७; २, ८३६-३८; जै १, ४८, १; शौ २०, ९५, १; सश्चत मा २०, ७०; का २२, ७, ४; मै ३, ११, ४; काठ ३८, ९; असश्चतम् ऋ १, ११२, ९; सश्चत[h] ऋ १, ६४, १२; ३, १६[२ (७, १८,२५)]; असश्चत तै ३, ३, ३.२; मै १, ३, ३६; ३९[i]; काठ ३०,६.
सश्चिरे ऋ १,११०,६; †सश्चिरे ऋ १,८४, १२; २,१, १३; ५, २०,२[j]; ६४,३; ६७,३; मै ४, १२, ४; काठ ८, १७; कौ २, ३५७; जै ३,२९,१४; शौ २०, १०९, ३; †सश्चुः ऋ ६, ३६, ३; मै ४, १४, १८; काठ ३८, ७; सश्चिम ऋ ९,१६,२.
सचथ[k]- -थाय ऋ १,१५६,५.
सचथ्य[l]- -†थ्यन् ऋ ८,१०१, ५; कौ १,२५५; जै १,२७,३; -थ्यैः ऋ ५, ५०,२.
सचध्यै[m] ऋ १,१६७,५.
सचन- -नः ऋ १, ११६, १८?[n]; -नस्य ऋ ६,३९,१.
सचना[o]->सचना-वत्[p]- -वन्तम् ऋ ८,२२,२.
†सचमान- -नः ऋ ९,७४,५; ९६, १९; १०, ३, ३; कौ २, ५२७; ८९८; जै ३, ४१, ३; ४, १३, ११; -नाः ऋ ५,४२,८; -नाय ऋ १०, ११७, ४; -नौ ऋ ५, ३६, ६.
सचस्-> √सचस्य>सचस्य-मान- -नः ऋ १०,८,७.
सचान- -नः ऋ ६,२०,२.
१सश्चत्- -श्चते ऋ २,१६,४.
२सश्चत्[q]- -श्चतः ऋ १,४२, ७; ३, ९, ४; ७, ९७, ४; खि ४, ९,७; काठ १७,१८.
?सु चक्रमे[r] ऋ ५, ८७,४.
स-चक्षुस्- -क्षुषः पै १५,१९,६.
१सु-चनस्[s]- -नाः ऋ १, १२७, ११.
√सचनस्य >सचनस्युमा (न>) ना- -ना ऋ १०,४,३.

a) अभ्यस्तस्वरः अभ्यासस्येत्वं च (पा ६, १,१९०; ७, ४,७८)। b) वैतु. उ. <√सिच् इति।
c) षत्वाभावः उसं. (पा ८,३,११०)।
d) °श° इति पाठः? यनि. शोधः द्र.।
e) प्रपु३ (वैतु. स्क. सा. एकवचनस्य सतः व्यत्ययेन बहुवचनमिति)। f) प्रपु३। g) उ. शत्रन्तं पदमिति?। h) मपु३। i) पाभे. पृ ३२१६ *j* द्र.।
j) पृ २९० *b*, *c* अप√सश्च् इत्यस्य वृत्तमिति यदुक्तं तन्नेष्टम् (तु. माश [१४, ३, १, १९] प्रभृ.; वैतु. PW. प्रभृ.)। सस्थ. ईरयन्ति इत्यत्र घा. अनादरे वा कदर्थभावे वा दम्भे वा वृत्तिः?। सर्वत्र च कर्मणि ष. द्र.। ?अन्यु° इति चेह (अन्नसमूहेऽर्थे) =अन्यु- इति द्र. (वैतु. माश. प्रभृ. इतरपर्याय इत्येव?)।
k) भाप. (साहाय्य-)। अथः प्र. उसं. (पाउ ३,११३)।
l) विप., नाप. (ऋ ५,५०,१)। हितार्थे यत् प्र.।
m) तुमर्थीयः अध्यैः प्र. (पा ३,४,९) तत्स्वरश्च।
n) √शक् 'शक्तौ'> *शक्षण->-णः इति शोधः।
o) भावे युच् प्र. उसं. (पा ३,३,१०७)।
p) तु. पपा. प्रभृ.। GW. =सचन- इति कृत्वा स्वार्थे मतुप् प्र. इति।
q) नाप. (उपद्रवत्- [शत्रु-])। कर्तरि अतिः प्र. (तु. २द्रवत्- प्रभृ.)। r) शोधः पृ ३१४९ *p* द्र.।
s) विप. (*प्रीतियुक्त- [अग्नि-])। (सह>)स+ (√चन्द् 'आह्लादन-'दीप्त्योः'> √*चन्> भावे) चनस्-> यनि. (वैतु. वें. सा. प्रभृ. पूप. =२समान- इति, उप. =अन्न- इति च?)।

**२सचनस्**[a]->सचनस्-तम[a]- -मा ऋ ८,२६,८.

**सचा** (बप्रा.)[b] ऋ १,५, ⌊२; ८, ४५, २९⌋; ७,२; ९,३; १०,४; ४०, १; ५१, ११; ६३, ३; ७१,४; ८१,८; ८३,५; ९३,११;१२२, ८; १३०, १; १३५, ३; १३९, ७[2]; १४०, ७; १६१,५; १६७, ७; १७४,६; २,१७,७; ३,१२, २; ५३, १०; ५४, २; ६०, ४; ४,१, ३; ३,९; ५,१०; ३१, ५; ३२,३;४; ३७,३; ५०, ११; ५, १६,५; १९, ४; ४४, १२; ४८, ४; ५६, ८; ९; ६५,३; ७४, २; ६,२४,१; २६,४;६; ४५,२२[c]; ५७,४; ५९,३; ७,१, २१; २२; २२, ४; ⌊३२,२; १०,५०,७⌋; ५९,३; ८१, २; ९३, ८; ८, १, १; ४, ⌊२;५२,१⌋; ३;२१,१५; २५,२४; ३२,२०; ३३, ४; ७; ४६, ७; ५१,१; ६१, ११; ६६, ६; ६८,१७; ७८, २; ९२, २९; ९३,२०;⌊९७,८[2]⌋; ९,१०,८[d]; ७०, ४; १०, २३,४; ६२, ६; ९३, ५; ९५,८; १०५, ४[e]; ९; १३१,४; १३४,४; खि ३,३-४, १; मा १०, ३३†; २०,६२;६८; ६९; ७६†; ३४,५६†; का ११, १०, ३†; २२.६, ८; ७,२; ३; १०†; ३३, २, १९†; †मै २, १३,६; ३,११,३$; ४[3]; $; ४, ९,१; १२,१; †काठ ७,१२[2]$; १०, १३; १७, १९; २३, ११; २६, ११; ३८,८; ९[3]; $; ३९, १२; क ६, २[2]; †कौ १, ११५; १४८; २४१; २४२; २५२; २९७;२,२०;९१; १०२; १४७; १७५; ५८२; ७१०; १०१६; १०२६; १०४६; १०७१; १११८; ३, २, ३; †जै १, १३, १; १६,४; २५, ९; १०; २६,१०; ३१, ५; २. ५,८; ३, २,११; ९, ५; १०, ४; १४,८; १६,१३; ४७, ८; ५८, ७; ४, ९,७;२६,५; †शौ २०, २५,५; ३८, ५; ४७, ५; ५३, १; ५६, ५; ५७,११; ६०, २; ६८,१२; ७०, ८; ७१, ९; ७३, ५; ७८; १; ८५, १; १२०, २; १२५, ४.

सचा-भू[f]- -भुवः ऋ ८, ३१, १०; -०भुवः[g] मा ३, ४७; का ३, ५,४; -भुवम् ऋ १, १११, १; १३१, ३[2]; †शौ २०, ७२,२[2]; ७५, १[2]; -†भुवा ऋ १, ३४, ⌊११; १५७, ४⌋; २, ३१, ⌊१; ८,३५.१⌋; ८,३५, २; ३; १०, ७६, ⌊(४,५५, ३) १⌋; मा ३४, ४७; का ३३,२, १०; -भुवे ऋ १०, ११७, ४; -भूः ऋ १०, ७०,९.

***सचि**[h]->सचि-विद्[i]- -विदम् ऋ १०, ७१,६[j].

---

[a]) विप. [निष्कपट-प्रीतियुक्तौ (इन्द्रनासत्यौ =*महा-नक्षत्रभूतौ ⌊अश्विनौ⌋)]। वें. सा. < √सच् इति, PW. प्रमृ. = १स-चनस्- इति च ? । सत्य-+चनस्-(प्रीति-)>बस. *सत्य-चनस्-> यनि. इति मतम् ।

[b]) GW. प्रभृ. सच्->तृ१ इति, या ⌊५, ५⌋ प्रभृ. सहार्थे अव्युत्पन्नः नि. इतीव ⌊तु. MVG १७७, ५⌋? भाप. (सहभाव-, संयोग-) । (√सच् ⌊बधा.⌋, 'समवायकर्षणादिषु' > भावे) *सचस्- > (तृ१) -चसा > यनि.। विप. (प्रीतिदीप्त्यन्यतरसहित-, ⌊इन्द्र-, सोम- प्रभृ.⌋)। (सह् >)स+(√चन्द् > *चन्न्- >) *चाँ, चा- > बस. स-चाँ, चा-। उभयथाऽपि वा. प्रायेण क्रिवि.। प्रायः सप्तमीयोगेषु स्थलेषु (ऋ १,९,३ प्रभृ), क्वचिदन्यत्र च (ऋ १, १०, ४ प्रभृ.) द्वितीयः कल्पः द्र. (वैतु. GW. प्रभृ. तत्र सप्तमीयुक्तः कप्र. इति ?)।

[c]) सस्थ. ?गाय>गायत इत्यध्यक्षरः शोधः। '(हे सखायः!) वः (युष्माकं स्तोत्रसमूहे वर्तमानं) तद् (गीतं सोमे) सुते (सति ⌊संप्रति⌋) सचा (*मिलित्वा) गायत, यद् (गीतं) शाकिने (इन्द्राय) शं (सुखकरं प्रतीयेत)' इति वा।

[d]) पाभे. पृ १६६८ C द्र.।

[e]) सगा. कौ १,१९६ जै १,२१,३ सदा इति पाभे.।

[f]) विप., नाप. (सखि-)। उस. उप. क्विबन्तम्।

[g]) =सपा. माश २,५,२,२९। तै १, ८, ३,१ मै १, १०, २ काठ ९ ४ मागृ २,१,१० सुदानवः इति पाभे.।

[h]) WAG. ⌊२,१३a⌋ GRV. प्रभृ. √सच् 'समवाये' इत्यर्थसमन्वय एव कृतादराः?। *नाप. (वाच्-, विद्या-)। (√*सक्ष् ⌊=√*शक्ष्, √शिक्ष्, √*शक्, √शास् प्रभृ.⌋ 'वचने = वाग्व्यवहारे' >) *सक्षि->यनि. (तु. सस्थ. सखि- ⌊*विद्वस्-, अध्यापक-⌋, पाभे., पूप., सा. ⌊अंशतः⌋, पंजा. साखि, खी ⌊पुस्तक-⌋ इति च) इति मतम्।

[i]) विप. (*अनूचान- ⌊सखि- =*विद्वस्-⌋)।

[j]) =सपा. ऐआ ३, २, ४ शांआ ८,१। तैआ १,३, १; २, १५,१ सखि-विदम् इति पाभे.।

स-चित्[a]- -चितः ऋ १०, ६४,७.
स-चित्त,त्ता[b]- -त्ताः शौ ६, १००, १; पै १९, १३, ४; -त्तान् पै १०,४,१.
?सचिद् यद्[c] पै १०,१२,१.
?सचीनम् पै १,४४,२.
स-चेतस्[b]- -तसः ऋ ८, ५८, १; १०,१, ३; ४, ५; ६४, ७; खि ३, १८, २; मा १८, ७६; का २०,५,९; काठ ७,१४; क ६,३; कौ १,४५८; जै १,४८, २; शौ १,३०,२; ५,२१, १२; ६,६८, १[d]; ७,२३,२; पै १९,२०, ४[e]; २०,५,१; -तसम् ऋ १०,४४, ४; शौ २०,९४,४†; -तसा ऋ १०, ११३,१; पै १६, ७२,२?[f]; -तसौ खि ३,१५,१३; मा[g] ५, ३; १२, ६०; का[g] ५, १, ३; १३, ४,१६; मै[g] १, २, ७; ८, ८; ३, २, ३; ९, ५; शौ २, २९,३[h]; ४,२६,१; २९,१[i]; २[i]; -ताः ऋ १, ६१, १०; ४,१६, ७; †शौ २०,३५,१०; ७७,७.
स-च्छन्दस्[j]- -¶न्दसः काठ २५,१; क ३८,४; -न्दाः[k] तै ५,२,११, १; मै ३,१२,२१; काठ ५०,५.
स-च्छ(न्द > )न्दा[l]- -न्दाः[k] मा २३,३४; का २५,७,२.
स-च्युति[m]- -तिम् मै २, ७,१२.
√सज्, सजन्ते पै १७,३७,६[n];३८, ५[o]; ३९, १०[p]; सजन्ताम्[q] पै १७, ३८,९.
असक्त पै २०,४०,१[r].
सक्त- -क्तः पै ४, १४, ६; -क्तम् शौ ५, १३, १.
सजमान- -नः पै १०, ६,११.
?सजताम् पै १, १३, ४.
स-जन[s]- > १सजन्य[t]- -न्या ऋ ४, ५०, ९.
¶सजनीय[u]- -यम् तै ७,५,५,२[v].
¶२सजन्य[u]- -न्यम् काठ ३४,४[v].
३स-जन्य[s,w]- -न्यः मै १,२,१०[x].
?सजयाम् पै १, ८६, ४.
सजात[y]- -तः मा ५,२३; का ५, ६, २; मै १, २, १०; २, ७,४?[z]; काठ २८, २¶; क ४४, २¶; शौ १, १९, ३; ३, ३,६; पै २, ७४, ६; -तम् शौ १३,[?]१,३१; पै १८,१७, १०; -¶ताः तै २, १, ६, ४; ७, ६[2]; २, ११, ४; ३, ९, १$; २; ३; ६, ९, ७; ३, ४, ८, १; मै १, १, ८$; ४, ८; २, १, १; ८; ३, २[4]; $; काठ १, ७$; १०, ११[2];

a) बस. पूप. सह इति प्राञ्चः GW. प्रभृ. च, अन्ये GRV. प्रभृ. =२समान- इति; उप. भाप. < √चित् इतीत्? । त्रिप. (सत्यव्यवहार-युक्त- [वाय्वादिदेव-]) । सत्य-+(√वृत् 'आचारे' >कर्तरि) वृत्- > उस. *सत्य-वृत्- > (*सच-इत्- >) यनि. इति मतम् ।
b) विप. (देव- प्रभृ.) । बस. । पूप. =२समान- ।
c) शोधः पृ २००२ *e* द्र. ।
d) सपा. पै १९,१७,१३ सुचेतसः इति पाभे. ।
e) शोधः पृ २४७२ *c* द्र. । f) °तसः इति शोधः द्र. ।
g) =सपा. माश ३,४,१,२४ । तै १, ३, ७, २ प्रभृ. समोकसौ इति पाभे. ।
h) सपा. पै १९,१७,१२ सुवर्चसम् इति पाभे. ।
i) सपा. तै ४,७,१५,२ सत्यौजसा इति, मै ३, १६, ५ सत्यौजसा इति, काठ २२,१५ सत्यौजसा इति, पै ४, ३८,१;२ °जसौ इति पाभे. ।
j) विप., नाप. (छन्दो-भेद-) । बस. पूप. =२समान- ।
k) पाभे. पृ २८४० *d* द्र. ।
l) पूप. =२समान- । शेषं पृ २८४० *e* द्र. ।
m) विप. । बस. । पूप. =सह ।
n) पाभे. पृ३२१६ *d* द्र. । o) पाभे. पृ ३२१६ *e* द्र. ।
p) पाभे. पृ३२१५ *q* द्र. । q) पाभे. पृ ३१९९ *f* द्र. ।
r) सपा. ऐब्रा ५,२७ असृक्त इति पाभे. ।
s) पूप. =२समान- । t) विप. (१धन-) । शेषं पृ २१४६ *k* द्र. (तु. WAG [२,३० *c*]) ।
u) =सूक्त-विशेष- । स जनासः (ऋ २,१२)+मत्वर्थे यक. छ > ईयः प्र. यत् प्र. च ।
v) सपा. सजनीयम् <> सजन्यम् इति पाभे. ।
w) नाप. । बस. उप. (=जन्मन्-) √जन्+भावे यत् प्र. । x) सपा. काठ २,११ सनाभिः इति पाभे. ।
y) ऋ. पपा. अनु स (=सह इति वा २समान- इति वा)+(√जन् >) जात- > तस. इति सा. [गौ.], बस. अन्तोदात्तः [तु. पा ६, २, १७१] इति वें. ?WAG. [२,३० *b*] । शौ. पपा. स-जा° इति च । नाप. (संबद्ध-) । (√सज् 'सङ्गे =संबन्धे' > भावे) *सज्-+(√भृ 'धारणे' > कर्तरि) भृत- > उस. *सज-भृत- यनि (तु. मा. तै. पपा.अनवग्रहः) । *भाप. (संबन्ध° [तु. सजात्य-]) । बस. पूप. कर्तरि प्र. उप. च भावे इति विशेष इति मतम् ।
z) सः, जातः इति शोधः (तु. पपा., सपा. मै ३,१, ५ ऋ १०,१,२ प्रभृ. च) ।

१२, १; २[१०]; $[२]; २१, ४; २५, ३; २८, २; क १, ७$; ३१, १९; ३८, ६; ४४, २; शौ ३,४, ३$[a]; –†०ताः ऋ १०, १०३, ६[b]; मा १७, ३८[b]; का १८, ४, ६[b]; तै ४, ६, ४, २[b]; मै २, १०, ४[b]; काठ १८, ५[b]; क २८, ५[b]; कौ २, १२०४[b]; $शौ ३, ३,४; ६,७३,१[c]; २[c]; ३[c]; १८,४,३७; $पै २,७४,४; –तान् ऋ १, १०९,१; मा ११, ५८[४]; का १२, ५,९[४]; तै १, १, ७, १[२]; २[३]; ¶२ १,३,२;६,५; ७,६[२]; २,५,६; ७; ८,१; ११, १[२];३;४[२]; ३,३,५; ९,२; ¶३, ४, ८,१; २; ४,१,५,४; मै १, १,८; २,११; १४; २,३,२[२]¶; ७,६[४]; काठ १,७[५]; १०,९;११, १[२]; १२, २[५d]; १६,५[४]; क १, ७[५]; शौ १, १०, ४; ११, १, ६; पै १, ९, ४; १६ ८९, ६; –तानाम् मा १०, २९; १७, ५१; २७,५; का ११,८,६;१८, ५, २; २९, १, ५; तै ¶२,२, ११,४; ३, ९, २; ३,५,४,२[e]; ४, १, ७, २; ४,५,१; ६,३,१; मै १, ४, ३[e]; ८¶; २,१,८¶; ३, २[५]; ¶[३]; १०, ४; १२, ५; काठ १०, ११¶; १८, ३; १६; २५, ३¶; ४०, २; क २८, ३; २९,४, ३८,६¶; शौ १,९,३[e]; २, ६, ४; ३, ८, २; ६, ५,२; १९ ४६,७; पै १,१८,२; ३,१, ४; ३३, ५; ४, १०, ६; २३, ७; १९, ३, १४; २०, ९, ४; –ते पै २०, ४०, ७; –तेभ्यः ¶काठ १२,१;२; –तेषु तै १,६, २,१[३]; १०, १[३]; २, ¶२,१,२; ३, १; ३, ९, १[३]; ३[२]; मै २, ३, २[५d]; काठ १२, २[२]; –तैः तै २, ३,३, ५¶; मै २,२,३¶; ¶काठ १०-११, ४; २१,४; क ३१,१९¶; शौ ३,८, ३; ११, १,७; पै १,१८,३; १६,८९,७.

साजात्य[f]– -त्यम् मै १,८,७[२]¶.

¶सजात-काम– -मः काठ ९, १७; १०, ९; ११; ११,१; ४; १२, १; २; १३; २१, ४; २५,३$; क ३१,१९; ३८,६.

¶सजात-त्व– -त्वम् काठ ६, ६; क ४, ५.

सजात-वनस्या[g]– -स्याम् तै २, ६, ९,७.

सजात-वनि– -नि मा १, १७; १८[२]; का १, ६, २; ३[२]; –निः मै १,२,८;३,८,५; –निम् काठ २,१२; ३,३; क २,६; १०.

सजात-शंस[h]– -सात् मै ४, १४, १७; पै २, ३०, ५.

†सजात्य[i]– -त्यम् ऋ २, १,५[j]; ३, ५४, १६; ८, २७,१०;७३, १२; –त्यस्य ऋ १०, ६४,१३; –त्यानाम् ऋ ८, ८३, ७[k]; मा ३३, ४७; का ३२, ४,४; –त्ये ऋ ८, १८, १९; –त्येन ऋ ८, २०, २१; कौ १, ४०४; जै १, ४५, ६.

?सजाताना पै २, ६४,१.

?सजाताम् पै १, १३, ४.

†स-जित्वन्( बप्रा. )[l]– -त्वानम् ऋ १,८,१; तै ३, ४,११,४; मै ४, १२, ३; काठ ८, १७; कौ १, १२९; जै १, १४, ५; शौ २०, ७०, १७; –त्वाना ऋ ३, १२, [४ (८, ३८, २)]; कौ २,

---

[a]) पाभे. पृ १३५७ *f* द्र.। [b]) पाभे. पृ८६८ *j* द्र.।

[c]) सपा. यक्र. पै १९,१०,९; ११;१० सुजाताः इति पाभे.।

[d]) द्विः सपा. सजातान् <> सजातेषु इति पाभे.।

[e]) पाभे. पृ २०५९ *i* द्र.।

[f]) =सजात्य-। भावे ष्यञ् प्र.।

[g]) षस. उप. भाप. वनस्या– (<✓वनस्य <वनस्-)। [h]) षस. उप. भाप.।

[i]) भाप. ( सजात-भाव-, संबन्ध- ), विप. (सजात-युक्त-, संबन्धवत्- ), नाप. ( संबद्ध-, बन्धु- )। भावे मत्वर्थे च यत् प्र. उसं. [ यक्र. पा ५,१, १२५; ४, ४,१२८ (तु. सा. GW.; वैतु. या [६,१४] सा [पक्षे] <*सु-जाति- इतीव?)]।

[j]) पृ १२६४ *i* यदुक्तं तन्नेष्टम्।

[k]) 'हे इन्द्र, विष्णो, मरुतः, अश्विना! सजात्यानाम् (बन्धूनां [सताम्]) एषां नः (*अस्माकम् [वैतु. सा. द्विर इति]) अधि-इत (*स्मरत [एते वयं युष्माकं बन्धवः सन्तः सर्वदा स्मरणार्हाः])' इति दा. ( वैतु. GW. GRV. भाप. इति)।

[l]) (स+[<सम्] [✓जि > कर्तरि] जित्वन्– >गस. इति PW. प्रभृ., उस. पूप. =१समान– इति सा., संगताऽरि– इति स्क. भा. प्रभृ., बस. इति वें. भ. च?। विप. (*शक्तिमत्- [रयि-, इन्द्राग्नि-])। वृष– (*भाप. [शक्ति-]) + [✓जि (=✓धा > *धि ['धारणे']) >कर्तरि] जित्वन्–>उस. *वृष-जित्वन्–> यनि. इति मतम्।

१०५२; जै ४, २३, १.

†स-जित्व(र>)री[a]- -रीः ऋ १०, ९७, ३; मा १२,७७; का १३, ६, ३; तै ४, २, ६, १; मै २, ७, १३; काठ १६,१३; क २५, ४; पै ११, ६, ३.

स-जुष्[b]- -जूः[c] ऋ १, २३,७; ४४, २; ⌊१४; ५, ५१, ८ (७, ६६, १०; १०, ६५, ७)⌋; ५, ५१, ८; ९[२]; १०[२]; ६०, ८; ६, ४७, २९; ७, ३४, १५; ८, ९७, १०; १०, ७५, ६; १०५, ९; खि १, ४, ७; ५, ७, ४,१८[३]; ५, १;३; मा ३, १०[४]; ६,११; ७ ५[d]; ८, १०; १२, ७४[४]; १४, ७[२०]; २९, ५५†; का ३, २, ३[२]; ४[२]; ६, २, ७; ७, २, २[d]; ८, ६, ३; १३, ५, १३[४]; १५, २, १[२०]; ३१, २, १२†; तै १, ३, ८, १; ४, २७, १; ४, ३, ४, ३[८]; ६, ६, ६†; ५, ६, ४, १[४]; ६, ५, ८,४; मै १, २, ११; १५; ३, २९; ८, ६; २, ८, १[१७]; १२, ३[४]; ३, ४, ४[५]; ९, ७†; १६, ३†; ४, ७, ४; काठ ३, ६; ४, ११; ६,७; ८[५]; १७, १[१०]; २२, ५[४]; ६; २८, ८; ४६, १†; क २, १३; ३, ९; ४, ६; ७[५]; २५,१०[११]; ३४,१; ४४,८; †कौ १, ३७०; २, २८०; ११३१; †जै १,३९, १; ३, २३, १२; ४, ११, ९; शौ ६, ३५, २; १२६,१†; ८, २, १३; २०, ५४, १†; पै ६, ९, ३; १५, ११, ९†; १६, ४, ३; १९, ९,५; २२, ४.

स-जोष[e]- -षाभ्याम्[f] तै १, ४,४,१; -षौ ऋ ३, ६२, २; तै ५, ६, ४, १?[g,h]; मै २, १२, ३?[g,h]; ३, ४,४?[g,h]; काठ २२,५?[g,h].

स-जोष(,षा)स्[i]- -षः[j] ऋ ६,२,३; -षसः ऋ १, ४३, ३; १३१, १; १३६, ४; १७३,७; २,११, १४; ३, ८, ८; २०, १; २२, ४; ४, ३४, ६; ८[४]; ५, २१, ⌊३; २३, ३; ८,२३, १८⌋; ५७, १; ८, २५, १४; २७, ५; १७; ५४, ३; ९, ५, ११; १८, ३; ८१, ४; १०२, ५; १०, ६५, १[k]; १२६, १; १७५, ३; खि ३, ६, ३; मा ३, ४४; १२, ५०†; का ३, ५, १; १३, ४, ६†; तै १, ८, ३, १; ४, २,४, ३†; मै १,१०, २; २,७,११†; काठ ९,४; १६,११†; क ८,७; २५, २†; †कौ १, ४२६; २, ४४५; †जै १, ४१, ८; ३,३४, ३; पै ३, ३८, ३[l]; ५, ३९, १†; -०षसः ऋ २, ३१, २; ५, ५४, ६; १०, ३५, ११; मै ४,१४,१७[m]; शौ ६,११५,१[m]; पै ९, १२, ९; १६, ४९, ४[m]; -षसम् ऋ १०, १५३, ४; शौ २०, ९३, ७†; -षसा ऋ ३, ५८, ७; ४, ४६, ६;७,७२, २; ८, ९,१२; २६, ⌊(१, ३६,४; ४०, ५; ७, ६६, १२) ११⌋; १०१, ७; मा २०, ९०; का २२, ८, ११; तै ४, ७,१, १; ५, ७, ३, २; मै ४, १०, १; ११, २; शौ २०, १४१, २†; -षसौ ऋ ८, ३५, ⌊१-२१⌋;

---

a) विप. (*शक्तिशालिनी-⌊वीरुध्-⌋) । = स-जित्वन्- । उप. क्वरप् प्र. इति विशेषः । पाप्र.<स-जित्वन्- इति ।

b) पपा. प्रभृ. ⌊सह्>⌋ स + ⌊√जुष् > कर्तरि⌋ *जुष्- > उस. इतीव । विप. (*सहभाव-वत्-) । (√*सज् 'सङ्गे = सहभावे' > भावे) *सज- + (√वस् 'निवासे = माने' > भावे) *उष्- > बस. *सजोष्- > यनि. । यद्वा *सजोषस्- > *सजो⌊स् >⌋ष्- > यनि. इति मतम् ।

c) न. द्वि१ वा. क्रिवि. ।

d) सपा. सजूः (माश ४,१,२,१६ च) <> सजोषाः इति पाभे. ।

e) = स-जुष्- ।

f) सपा. °षा° (आपश्रौ १२, १४, ९ च) <> °षो° (माश ४,१,३,१९[३] माश्रौ २, ३,५, ४ च) इति पाभे. ।

g) °जोषसौ इति शोधः (तु. पाभे.) ।

h) सपा. °षौ <> °षसौ (माश ७,२,३,८ च) इति पाभे. ।

i) = स-जुष्- । उप. *उष(,षा)स्- इति भाप. इति मतम् ।

j) वा. क्रिवि. (तु. PW. GW. प्रभृ.; वैतु. वें. सा. स-जोष्- ⌊विप.⌋ > प्र३ इतीव ?) ।

k) विप. (*सहवर्तिन्-⌊देव-⌋) । स (= सह) + (√जुष् 'प्रीतौ' >) जोषस्- > स-जो° इति GRV. प्रभृ. । (√सज् 'सङ्गे' >) *सज- (साधारण-) + (√वृष् '*निवासे' >) *वर्षस्- > बस. *सज-वर्षस्- > यनि. (तु. ⌊तात्पर्ये⌋ सा.) इति मतम् ।

l) सपा. °षसः <> °षाः (माश ९, २, ३, २८[२] च) <> मै २,१०,६ सह इति पाभे. ।

m) सपा. सजोषसः (तैब्रा ३, ७,१२,१ तैआ २, ३,१ च) <> सजोषाः (आपमं २,११,४ च) इति पाभे. ।

खि ५, ७, ४, १८[a]; मा १२, ७४[a]; का १३, ५, १३[a]; –षाः ऋ १, ६५, १[b]; ७२, ६[b,c]; ९०, १; ११८, ११[b,d]; १५३, १[b]; १८६, ⌊२[b]; ७, ६०, ४[b]⌋; ३; ६; २, ३१, ४; ३, ४, ⌊८; ७, २, ८⌋; ३२, २; ३५, ९; ४३, ३; ४७, ⌊२ (५२, ७)⌋; ४, ५, १[b]; ३४, ७[३]; ⌊७; ६, ४०, ५⌋; ३९, ३; ५६, ४[b,d]; ५, ४, ४; ३१, ५[b]; ४१, २[b]; ४[b,c]; ८; ४३, ६; ६, ३, १; १३, ३; १७, ११[b]; ४९, ७; ५०, १२[b]; १३; ५१, ⌊५[b]; (१०, ६३, १७; ६४, १७)⌋; ६७, ५[b]; ६८, १; ७, २, ८; ३, १[e]; ५, ९; १०, ४; २४, ⌊४ (८, ८, १; १८; ८७, ३)⌋; ३४, २३[f]; ३८, ४[b,c]; ४८, ४[b]; ६०, ४; ८, ४८, १५; ६३, १२[b,c]; १०, १८, ६[g]; २०, १०[h]; ६१, २७[b]; ८३, २[i]; ११०, ३; खिसा ३, ६[j,k]; मा ७, ३७†; १७, ६९[l]; २०, ३९; २९, ३; ४; ८; २८†; ३३, ५०†; का ७, २०, १†; १८, ६, ५[l]; २२, ४, ४; ३१, १, ३; ४; ८; ४, ४†; ७†; तै १, ४, ३, १[m]; ४२, १†; ६, १२, ६†[b]; ३, ३, ११, ३[j,k]; ४, १, ११, २†; ६, ५, २[l]; ५, १, ११, २[२]; ३; ६, ४, ६, २[m]; ३[m]; मै १, ३, ५[m]; २३†; ३, ११, १; १६, २[३]; †४, १२, २[b]; ३[l]; ४[n]; ६[j,k]; १३, ३; १४, ३; ९$; ११[२]†[n]; १५; काठ ४, १[m]; ७, १३[३]; १६†; ८, १६†[b]; १७†; १६, २०†; १७, १८†; १८, ४[l]; २१, ९[l]; ३५, १†[e]; ३८, ६; ४६, २[३]; क ३, १[m]; ६, २; २८, ४[l]; ४८, २†[e]; कौ १, २१८†; २, ५६९†[e]; जै १, २३, ५†; ३, ४६, ४†[e]; शौ ३, २२, १[j,k]; ४, १४, ५[l]; ३२, २†[l]; ५, १२, ३†; २८, ५; ७, १८, ३[j,k]; ११३, २; १२, २, २४†[g]; पै २, ५९, ३; ३, १८, १[j,k]; ४, ३२, २†[l]; १७, ३२, ५†[g]; २०, २, ५[j,k]; –षोभ्याम्[o] मा ७, ८; का ७, ३, २; मै १, ३, ६; काठ ४, २; क ३, २.

‡**सजोषा**[p]– -षाः[q] कौ १, २०५; जै १, २२, २.

**सं-चकान–** सं√कै द्र.

**सं√चक्ष्**, सम्···चष्टे ऋ ७, ६०, ३; ⌊(४, २, १८ ८, २५, ७)⌋.

सं-चक्ष्[r]– -चक्षि ऋ ६, १४, ४.

सं-चक्षाण– -णः ऋ ६, ५८, २; मै ४, १४, १६†.

सं-चक्षे[s] ऋ १, १२७, ११; ७, १८, २०; शौ ५, ११, २?[t,u].

†सं-चक्ष्य > क्ष्या ऋ १, १६५, १२; मै ४, ११, ३; काठ ९, १८.

**सं√चर्**, > चारि, संचरति तै ६, १, ९, ५¶[v]; शौ ८, ९, २२[w];

a) पाभे. पृ ३२२१ *h* द्र. ।

b) न. द्वि१ सत् वा. क्रिवि. (वैतु. L ⌊५५३⌋ °षसः इति शोधः?) ।

c) वैतु. सा. प्र१ इति ।

d) GW. स-जोष– > -षाः इति ? ।

e) न. क्रिवि. (तु. ORN.; वैतु. वें. सा. विप. ⌊अग्नि-⌋ सत् द्वि१ प्रथमान्तमिति, GW. विप. ⌊देव-⌋ ) सत् स-जोष– > -षाः ⌊प्र३⌋ इति । '(हे ऋत्विजः ! यूयम्) अग्निं देवं यजिष्ठं दूतं (सन्तम्) वः (युष्माकम्) अध्वरे अग्निभिः (आहवनीयादिभिः साधनभूतैः) सजोषाः (सायुज्येन ⌊क्रिवि.⌋) कृणुध्वम् (सपर्यत)' इति वा. ।

f) तु. पपा. प्रभृ.; वैतु. GW. स-जोष– > स्त्री. प्र१ इति ।

g) सपा. तैआ ६,१०,१ आग्निगृ ३,७, १:९बौपि १,१७:९ सुरत्नः इति पाभे. ।

h) वैतु. PG ⌊२, २२६⌋ सजोषसे वा सजोषसः वेति संभावुकः ।

i) सपा. तैब्रा २,४,१,११ श्रमेण इति पाभे. ।

j) न. द्वि१ सत् वा. क्रिवि., यद्वा ?सजोषाः > सजोषसः (विश्वे देवासः) इति शोधः । सस्थ. अदितिः > अदित्या (तृ१) इति चापरः शोधः ।

k) पाभे. पृ३२२१ *m* द्र. ।

l) पाभे. पृ३२२१ *l* द्र. ।

m) पाभे. पृ ३२२१ *d* द्र. ।

n) वा. क्रिवि. द्र. ।

o) पाभे. पृ ३२२१ *f* द्र. ।

p) विप. (गिर्-) । (√सज् 'सङ्गे' > )सज्- (सक्त-) +(√जुष् > भावे) जोष– > बस. *सज्-जो(ष > ) षा– > *सज ओ° > यनि. । सपा. ऋ १, ९, ४ शौ २०, ७१, ७ अजोषाः (जोषयुक्ताः) इति समानार्थः पाभे., यत्र (आ ⌊सह⌋ > ) अ + जो(ष)– > बस. यनि. । यद्वा *सज-जोषा– > *ह अ-जो° > *अ अ-जो° > आ-जो° > यनि. (पृ ६६ *h* यदुक्तं तन्नेष्टम्) ।

q) प्र३ ।

r) गस. उप. भावे कृत् (तु. MGS ⌊१६७,४⌋ प्रभृ.) ।

s) गस. उप. केनन्तम् ।

t) सं° इति ? यनि. शोधः (तु. W.) ।

u) सपा. पै ८,१,२ संपृच्छे इति पाभे. ।

v) तु. सस्थ. टि. अनु ।

w) पाभे. पृ २८३७ *s* द्र. ।

संचरति मै ३,८,१०[2]¶;¶संचरति काठ २६, १[2]; क ३६,३[a]; ४०,४[2]; पै १६,१९,१०[b]; १८, २४, ९[c]; संचरेते ऋ १, १२३, ७; ३, ७, १; काठ ३९, १०[d]; शौ ८,९, १२[d]; पै १६,१९,२[d]; १७, ७, २; संचरतः तै ५, २, १०, ६¶; शौ ८, ९, १२[e]; पै १६, १९, २[e]; संचरन्ति ऋ ५, १,४; ७,३३,९[f]; खि ४, ११, ११; तै १,५,१०,४[g,h]; पै १९, ९, २[i]; संचरन्ति ऋ ८, ४८, ९[i]; १०, ४, २[i]; १२, ८; शौ ३,१५,२[i]; ४, ३८, ५; ६,५५, १[i]; १२,१,४७[j]; १८,१, ३६†; संचरन्ति पै ५, १५, १; २०, १८,३†; सम्…चरन्ति ऋ ५. ९, २; ६, ४७, ३१[k]; मा २९, ५७[k]; तै ४, ६, ६, ७[k]; काठ ४६, १[k]; सम् (चरन्ति) ऋ ५, ९, २; संचरत् शौ १३, २, ४०; पै १८, २४, ८; संचराते शौ ३, ४,३[l]; संचरः[m] पै १९, ३६, ४; ३८, २; ?संचरताम्[n] पै १, १०६, २; संचरन्ताम् पै १७,३८,२[o]; संचरन्तु ऋ४,८,७; सम्…चरन्तु मै ३,१६, ३‡[k]; संचर शौ ६,४५,१[m]; समचरत् तै ५, १, १, ४¶; शौ १३, २, ४१[c]; समचरत् मै ३, १, २¶; ¶संचरेत् काठ २६,१[4]; क ४०, ४[4]; संचरेयुः मै ४,२,१०¶;संचरेम शौ ३,१२,१[p]; पै १,१०६, २[n];३,२०,१[f];७,६,५[f];९[f].

सम्…चारय[q] मा २३, २१[r]; का २५, ६, १.

१संचर[s]- -राः मा २४, १५; १७; १९; का २६,३,५;४,२; ४.

२¶संचर[t]- -रे तै ५, ४, ३,५; मै ३, ३,४; काठ २१, ६; क ३१, ११; पै २०, ५, १$[u].

१संचरण- -णे ऋ १, ५६, ⌊२; ४, ५५, ६⌋.

२संचर(ण->)णी[v]- -णीः ऋ ६, २४, ४.

संचरत्- -रन्तः[w] क १, १६; ३६, ३; -|रन्तम् ऋ १०, १७, ⌊(१,१४६,३; ३, ३३,३) ११⌋; मा १३,५; का १४,१,५; तै ३, १,८,३; ४,२,८,३; ९,५; मै २, ५, १०; काठ १३,९; १६,१५; ३५,८; शौ १८,४,२८; पै २०, १२,७; -रन्तौ[x] तै १,७,७,२.

संचरन्ती- -न्ती ऋ १, १४६, ⌊३[f]; ३, ३३, ३[g]; (१०, १७, ११)⌋; तै ४, ३, ११, १[d,y]; -न्तीः तै १, ८, १४,२[z].

संचरेण्य[f,a1]- -ण्यम् ऋ १,१७०, १.

?सं च वि च त्र त्रियें मं च तु रेकजं पै १, १०७, ६.

?सं चा च[b1] काठ ४०,६.

सं √चि (चयने), सं (चितन)[c1] ऋ

a) सपा. काठ २३,६ संतरति इति पाभे.।

b) पाभे. पृ २८३७ s द्र.।

c) सपा. संचरति <> समचरत् इति पाभे.।

d) सपा. संचरेते <> संचरन्ती <> मै २,१३,१० अनुसंचरेते इति पाभे.। e) पाभे. पृ २८३७ p द्र.।

f) तु. सस्थ. टि. २अभि। g) तु. सस्थ. टि. अनु।

h) सपा. आश्रौ ३,१४,१० संतरन्तु इति पाभे.।

i) पाभे. पृ२९६६ l द्र.। j) पाभे. पृ१३१२ d द्र.।

k) सपा. सम्…चरन्ति <> सम्…चरन्तु <> शौ ६,१२६,३ सम्…पतन्तु इति पाभे.।

l) सपा. पै ३,४,३ अव…दधाति इति पाभे.।

m) सपा. संचरः <> संचर इति पाभे.।

n) संचरन्ती- (विप. ⌊एकाष्टका-⌋) > -न्तीम् इति शोधः (तु. ⌊अंशतः⌋ मूको.)। 'सस्यम् उपलक्ष्य संचरन्ती° (ताम्) उप (कप्र.) संचरेम'।

o) पाभे. पृ ३०३५ g द्र.।

p) तु. सस्थ. टि. उप।

q) सपा. तै ७,४,१९,१ काठ ४४,८ अन्वज इति पाभे.।

r) पृ १३१३ सस्थ. निर्देशो नेष्टः।

s) विप. (पशु-)। गस. उप. कर्तरि अच् प्र.।

t) नाप. (मार्ग-)। गस. उप. अधिकरणे घः प्र. (पा ३, ३,११९)।

u) सपा. शौ ७,२३,२ स्वसरे इति पाभे.।

v) विप. (स्रुति-)। कर्तरि ल्युट् प्र.।

w) सपा. मा ४, १ प्रभृ. माश ३, १,१, १२ संतरन्तः इति पाभे.।

x) =सपा. तैब्रा २, ७,१६, १ तां १,७,५ बौश्रौ १८, १७ : २० प्रभृ.। मागृ १, १३, ४ संचरन्ति इति, वाश्रौ ३,१,२,१ कागृ २६,२ संपतन्ति इति च पाभे.।

y) तु. सस्थ. टि. अनु (परि.)।

z) पाभे. पृ ८५२ f द्र.। a1) गस. कृत्यार्थे केन्यः प्र.।

b1) सपा. मा २७, ४५ का २९, ६, १ सुन्चाञ्च (=सम्…अञ्च, च) इति पाभे.।

c1) सस्थ. टि. ?शस्त (परि.) द्र.।

